# विज्ञप्ति

इस महीने अर्थात् औगस्ट सन् १८८४ ई॰ पर्यन्त जो पुस्तकें बेचने के लिये तय्यार हैं वह इस सूचीपत्र में लिखी हैं और उनका मोल भी बहुत किफ़ायत से घटाकर नियत हुआ है परन्तु व्यापारियों के लिये और भी सस्ती होंगी जिनको व्यापार की इच्छा हो वह छापेखाने के मुहतमिम अथवा मालिक के नाम ख़त भेजकर क़ीमत का निर्णय करलें ॥

| नामकिताब | नामकिताब | नामकिताब | नामकिताब |
|---|---|---|---|
| संस्कृत भाषा | विराट् पर्व उद्योगपर्व | ४ – विराट पर्व | ३ – बन पर्व |
| टीका सहित | भीष्मपर्व द्रोणपर्व | ५ – उद्योग पर्व | ४ – विराट पर्व |
| याज्ञवल्क्य स्मृति | ३ – तीसरे हिस्सा में | ६ – भीष्म पर्व | ५ – उद्योगपर्व |
| सन्ध्या पद्धति | कर्णपर्व शल्यपर्व | ७ – द्रोण पर्व | ६ – भीष्म पर्व |
| अतार्क | गदापर्व सौप्तिक पर्व | ८ – कर्ण पर्व | ७ – द्रोण पर्व |
| भगवद्गीता टी॰ कृ॰ दे॰ | ऐषिक पर्व विशो- | ९ – शल्य पर्व व गदा | ८ – कर्ण पर्व |
| तथा टीका भा॰ गि॰ | क पर्व स्त्री पर्व शा- | पर्व सौप्तिक पर्व मय | ९ – शल्य पर्व |
| गीतगोविन्द | न्ति पर्व में राजधर्म | ऐषिक व विशोक | १० – गदा पर्व |
| कथा सत्यनारायण | आपद् धर्म मोक्ष- | व स्त्री पर्व | ११ – स्त्री पर्व |
| परमार्थसार | धर्म | १० – शान्ति पर्व राज | १२ – स्वर्गारोहण पर्व |
| पाराशरी सटीक | ४ – चौथे हिस्सा में | धर्म व आपद्धर्म | रामायण रामविलास |
| शीघ्रबोध सटीक | शान्तिपर्व दानधर्म | व मोक्ष धर्म दान | रामायण तुलसीकृ॰ |
| लघुजातक | अश्वमेध आश्रमवा- | धर्म | रामायण सटीक मय |
| षट्पञ्चाशिका | सिक पर्व व मौशल | ११ – अश्वमेध आश्रम | मानसदीपिका को- |
| सामुद्रिक | पर्व महाप्रस्थान | वासिक पर्व व मौ- | ष आदि |
| भाषा इतिहास | पर्व स्वर्गारोहण प | शल पर्व महाप्रस्था | तथा जिल्दबन्धी |
| | र्व हरिवंश पर्व | न स्वर्गारोहण पर्व | तथा मोटे अक्षरों की |
| महाभारत | महाभारत पर्व अले- | १२ – हरिवंश पर्व | मय तसवीर व क्षेपक |
| १ – पहिले हिस्सा में | हदा भी हैं | महाभारत सबलसिं | रामायण तु॰ कृ॰ टी- |
| आदिपर्व सभापर्व | १ – आदिपर्व | ह चौहान कृत | का [illegible] जीकृ॰ |
| बन पर्व | २ – सभा पर्व | १ – आदि पर्व | रामायण तु॰ कृ॰ टीका |
| २ – दूसरे हिस्सा में | ३ – बन पर्व | २ – सभा पर्व | शुकदेवलाल कृ॰ |

श्री गणेशाय नमः

# अमरकोष भाषानुवाद॥



यस्य ज्ञान दया सिन्धो रगाधस्या नघा गुणाः।
सेव्यता मक्षयो धीराः स श्रिये चामृताय च १
समा हृत्यान्य तन्त्राणि। संक्षिप्तैः प्रति संस्कृतैः
सम्पूर्ण मुच्यते वर्गैर्नामलिङ्गानु शासनम् २
~~प्रायशो रूपभेदेन साहचर्याच्च कुत्रचित्~~ ।
स्त्रीपुन्नपुंसकं ज्ञेयं तद्विशेषविधेः क्वचित् ३
भेदाख्यानाय न द्वन्द्वो नैक शेषो न सङ्करः। कृतो
ऽत्र भिन्न लिङ्गानामनुक्तानां क्रमादृते ४ त्रिलि
ङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति। निषिद्धलि
ङ्ग शेषार्थं त्वन्ताथादि न पूर्वभाक् ५ स्वरव्ययं
स्वर्गनाक त्रिदिव त्रिदशालयाः। सुरलोको द्यो
दिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ६

दोहा॥ दन्ति बदन सकल रदन सिद्धि सदन महराज॥
उमा नंदन मोदक अदन पुरवें सब मम काज॥ १॥
स्वर्ग के नाम॥ स्वः १ स्वर्ग २ नाक ३ त्रिदिव ४ त्रिदशा
लय ५ सुरलोक ६ द्यौः ७ द्यौः ८ त्रिविष्टप ९॥ ६॥

असुरा दैत्य दैतेय दनुजेन्द्रारि दानवाः । शुक्र शिष्या दितिसुताः पूर्व्वदेवास्सुरद्विषः १२
सर्व्वज्ञस्सुगतो बुद्धो धर्म्मराजस्तथागतः । समन्तभद्रो भगवान् मारजिल्लोकजिज्जिनः १३
षडभिज्ञो दशबलोऽद्वयवादी विनायकः । मुनीन्द्रः श्रीघनश्शास्ता मुनिश्शाक्यमुनिस्तु यः १४ स शाक्यसिंहस्सर्व्वार्त्थसिद्धश्शौद्धोदनिश्च सः । गौतमश्चार्कबन्धुश्च मायादेवीसुतश्च सः १५ ब्रह्मात्मभूस्सुरज्येष्ठः परमेष्ठी पितामहः हिरण्यगर्भो लोकेशस्स्वयम्भूश्चतुराननः १६

(दैत्यों के नाम) असुर १ दैत्य २ दनुज ३ इन्द्रारि ४ दानव ५ शुक्रशिष्य ६ दैतेय ७ दितिसुत ८ पूर्व्वदेव ९ सुरद्विट् १० ॥ १२ ॥ (बुद्ध के नाम) सर्व्वज्ञ १ सुगत २ बुद्ध ३ धर्म्मराज ४ तथागत ५ समन्तभद्र ६ भगवान् ७ मारजित् ८ लोकजित् ९ जिन १० ॥ १३ ॥ षडभिज्ञ ११ दशबल १२ अद्वयवादी १३ विनायक १४ मुनीन्द्र १५ श्रीघन १६ शास्ता १७ मुनि १८ (शाक्यसिंह के नाम) शाक्यमुनि १ ॥ १४ ॥ शाक्यसिंह २ सर्व्वार्त्थसिद्ध ३ शौद्धोदनि ४ गौतम ५ अर्कबन्धु ६ मायादेवीसुत ७ ॥ १५ ॥ (ब्रह्मा के नाम) ब्रह्मा १ आत्मभूः २ सुरज्येष्ठ ३ परमेष्ठी ४ पितामह ५ हिरण्यगर्भ ६ लोकेश ७ स्वयम्भूः ८ चतुरानन ९ ॥ १६ ॥

धाताब्जयोनिर्द्रुहिणो विरञ्चिः कमलासनः। स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः २७ विष्णुर्नारायणः कृष्णो वैकुण्ठो विष्टरश्रवाः। दामोदरो हृषीकेशः केशवो माधवः स्वभूः २८ दैत्यारिः पुण्डरीकाक्षो गोविन्दो गरुडध्वजः। पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः २९ उपेन्द्र इन्द्रावरजश्चक्रपाणिश्चतुर्भुजः। पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः ३० देवकीनन्दनः शौरिः श्रीपतिः पुरुषोत्तमः। वनमाली बलिध्वंसी कंसारातिरधोक्षजः ३१॥

धाता २० अब्जयोनि २१ द्रुहिण २२ विरञ्चि २३ कमलासन २४ स्रष्टा २५ प्रजापति २६ वेधाः २७ विधाता २८ विश्वसृट् २९ विधि ३० ॥ २७ ॥ (विष्णु के नाम) विष्णु १ नारायण २ कृष्ण ३ वैकुण्ठ ४ विष्टरश्रवा ५ दामोदर ६ हृषीकेश ७ केशव ८ माधव ९ स्वभू १० ॥ २८ ॥ दैत्यारि ११ पुण्डरीकाक्ष १२ गोविन्द १३ गरुडध्वज १४ पीताम्बर १५ अच्युत १६ शार्ङ्गी १७ विष्वक्सेन १८ जनार्दन १९ ॥ २९ ॥ उपेन्द्र २० इन्द्रावरज २१ चक्रपाणि २२ चतुर्भुज २३ पद्मनाभ २४ मधुरिपु २५ वासुदेव २६ त्रिविक्रम २७ ॥ ३० ॥ देवकीनन्दन २८ शौरि २९ श्रीपति ३० पुरुषोत्तम ३१ वनमाली ३२ बलिध्वंसी ३३ कंसाराति ३४ अधोक्षज ३५ ॥ ३१ ॥

विश्वम्भरः कैटभजिद्विधुः श्रीवत्सलाञ्छनः।
वसुदेवोस्यजनकस्सएवानकदुन्दुभिः २२
बलभद्रः प्रलम्बघ्नो बलदेवोऽच्युताग्रजः।
रेवतीरमणोरामः कामपालो हलायुधः २३
नीलाम्बरो रौहिणेयस्तालाङ्को मुशली हली।
सङ्कर्षणः सीरपाणिः कालिन्दीभेदनोबलः २४
मदनो मन्मथो मारः प्रद्युम्नो मीनकेतनः।
कन्दर्पो दर्प्पकोऽनङ्गः कामः पञ्चशरस्स्मरः
२५ शम्बरारिर्मनसिजः कुसुमेषुरनन्यजः।
पुष्पधन्वा रतिपतिर्मकरध्वज आत्मभूः २६

विश्वम्भर ३६ कैटभजित् ३७ विधु ३८ श्रीवत्सला-
ञ्छन ३९ पुराण पुरुष ४० यज्ञ पुरुष ४१ नरकान्तक ४२
जलशायी ४३ विश्वरूप ४४ मुकुन्द ४५ मुरमर्द्दन ४६
(वसुदेव के नाम) वसुदेव १ आनकदुन्दुभि २ ॥ २२॥
(बलदेव के नाम) बलभद्र १ प्रलम्बघ्न २ बलदेव ३ अ-
च्युताग्रज ४ रेवती रमण ५ राम ६ कामपाल ७ हलायु-
ध ८ ॥ २३॥ नीलाम्बर ९ रौहिणेय १० तालांक ११
मुशली १२ हली १३ संकर्षण १४ सीरपाणि १५ कालि-
न्दीभेदन १६ बल १७ ॥ २४॥ (काम के नाम) मदन १
मन्मथ २ मार ३ प्रद्युम्न ४ मीनकेतन ५ कन्दर्प्प ६ दर्प्पक ७ अ-
नंग ८ काम ९ पञ्चशर १० स्मर ११ ॥ २५॥ शम्बरारि १२ मनसि-
ज १३ कुसुमेषु १४ अनन्यज १५ पुष्पधन्वा १६ रतिपति १७ म-
करध्वज १८ आत्मभू १९ ॥ २६॥

शम्भुरीशः पशुपतिश्शिवश्शूली महेश्वरः।
ईश्वरश्शर्व ईशानश्शङ्करश्चन्द्रशेखरः ३१
भूतेशः खण्डपरशुर्गिरीशो गिरिशो मृडः।
मृत्युंजयः कृत्तिवासाः पिनाकी प्रमथाधिपः
३२ उग्रः कपर्दी श्रीकण्ठश्शितिकण्ठः कपा-
लभृत्। वामदेवो महादेवो विरूपाक्षस्त्रिलोचनः ३३
कृशानुरेताः सर्वज्ञो धूर्जटिर्नीललोहितः।
हरस्स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ३४
गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः।
व्योमकेशो भवो भीमस्स्थाणू रुद्र उमापतिः ३५

(महादेव के नाम) शम्भु १ ईश २ पशुपति ३ शिव ४ शूली ५ महेश्वर ६ ईश्वर ७ शर्व ८ ईशान ९ शङ्कर १० चन्द्रशेखर ११ ॥ ३१॥ भूतेश १२ खण्डपरशु १३ गिरीश १४ गिरिश १५ मृड १६ मृत्युंजय १७ कृत्तिवासाः १८ पिनाकी १९ प्रमथाधिप २० ॥ ३२॥ उग्र २१ कपर्दी २२ श्रीकण्ठ २३ शितिकण्ठ २४ कपालभृत् २५ वामदेव २६ महादेव २७ विरूपाक्ष २८ त्रिलोचन २९ ॥ ३३॥ कृशानुरेताः ३० सर्वज्ञ ३१ धूर्जटि ३२ नीललोहित ३३ हर ३४ स्मरहर ३५ भर्ग ३६ त्र्यम्बक ३७ त्रिपुरान्तक ३८ ॥ ३४ ॥ गंगाधर ३९ अन्धकरिपु ४० क्रतुध्वंसी ४१ वृषध्वज ४२ व्योमकेश ४३ भव ४४ भीम ४५ स्थाणु ४६ रुद्र ४७ उमापति ४८ ॥ ३५॥

शम्भुरीशः पशुपतिश्शिवश्शूली महेश्वरः।
ईश्वरश्शर्व्व ईशानश्शङ्करश्चन्द्रशेखरः ३१
भूतेशः खण्डपरशुर्गिरीशोगिरिशोमृडः।
मृत्युंजयः कृत्तिवासाः पिनाकी प्रमथाधिपः
३२ उग्रः कपर्द्दी श्रीकण्ठश्शितिकण्ठः कपा-
लभृत्। वामदेवोमहादेवोविरूपाक्षस्त्रिलोचनः ३३
कृशानुरेतास्सर्व्वज्ञो धूर्ज्जटिर्न्नीललोहितः।
हरस्स्मरहरो भर्गस्त्र्यम्बकस्त्रिपुरान्तकः ३४
गङ्गाधरोऽन्धकरिपुः क्रतुध्वंसी वृषध्वजः।
व्योमकेशो भवो भीमस्स्थाणू रुद्र उमापतिः ३५

(महादेव के नाम) शम्भु १ ईश २ पशुपति ३ शिव ४ शू-
ली ५ महेश्वर ६ ईश्वर ७ शर्व्व ८ ईशान ९ शङ्कर १०
चन्द्रशेखर ११ ॥ ३१॥ भूतेश १२ खण्डपरशु १३ गि-
रीश १४ गिरिश १५ मृड १६ मृत्युंजय १७ कृत्तिवासाः १८
पिनाकी १९ प्रमथाधिप २० ॥ ३२॥ उग्र २१ कपर्द्दी २२
श्रीकण्ठ २३ शितिकण्ठ २४ कपालभृत् २५ वामदेव
२६ महादेव २७ विरूपाक्ष २८ त्रिलोचन २९ ॥ ३३॥
कृशानुरेताः ३० सर्व्वज्ञ ३१ धूर्ज्जटि ३२ नीललोहित ३३
हर ३४ स्मरहर ३५ भर्ग ३६ त्र्यम्बक ३७ त्रिपुरान्तक ३८ ॥
३४ ॥ गंगाधर ३९ अन्धकरिपु ४० क्रतुध्वंसी ४१ वृष-
ध्वज ४२ व्योमकेश ४३ भव ४४ भीम ४५ स्थाणु ४६
रुद्र ४७ उमापति ४८ ॥ ३५॥

कपर्दोऽस्य जटाजूटः पिनाकोऽजगवन्धनुः ।
प्रमथास्स्युः पारिषदा ब्राह्मीत्याद्यास्तु मात-
रः ३६ विभूतिर्भूतिरैश्वर्य्यमणिमादिक-
मष्टधा। उमाकात्यायनी गौरी काली हैमव-
तीश्वरी ३७ शिवा भवानी रुद्राणी शर्व्वा-
णी सर्व्वमङ्गला। अपर्णा पार्व्वती दुर्गा मृ-
डानी चण्डिकाम्बिका ३८ विनायको वि-
घ्नराज द्वैमातुर गणाधिपाः । अप्येक दन्त है-
रम्ब लम्बोदर गजाननाः ३९

(इन की जटा) कपर्द १ (इन का धनु पिनाक १ अजगव २
(इन के पार्षद) प्रमथ १ पारिषद २ (ब्राह्म्यादि शक्तियों के
नाम) ब्राह्मी १ माहेश्वरी २ कौमारी ३ वैष्णवी ४ वाराही
५ इन्द्राणी ६ चामुण्डा ७ ॥ ३६ ॥ (ऐश्वर्य्य के नाम)
विभूति १ भूति २ ऐश्वर्य्य ३ (इस के नाम ८ हैं) अणि-
मा १ महिमा २ गरिमा ३ लघिमा ४ प्राप्ति ५ प्राकाम्य ६
ईशित्व ७ वशित्व ८ (पार्वती के नाम) उमा १ कात्यायनी
२ गौरी ३ काली ४ हैमवती ५ ईश्वरी ६ ॥ ३७ ॥ शिवा ७
भवानी ८ रुद्राणी ९ शर्व्वाणी १० सर्व्वमंगला ११ अप-
र्णा १२ पार्व्वती १३ दुर्गा १४ मृडानी १५ चण्डिका १६ अ-
म्बिका १७ ॥ ३८ ॥ आर्या १८ दाक्षायणी १९ गिरिजा २० मेन
कात्मजा २१ (गणेश के नाम) विनायक १ विघ्नराज २ द्वैमा-
तुर ३ गणाधिप ४ एकदन्त ५ हेरम्ब ६ लंबोदर ७ गजानन ८ ॥ ३९

कार्त्तिकेयो महासेन षरजन्मा षडाननः । पा
र्वती नन्दन स्स्कन्द स्सेनानीरग्निभूर्गुहः ४०
बाहुलेय स्तारकजिद्विशाख शिखिवाह
नः । षाण्मातुर श्शक्तिधरः कुमारः क्रौञ्च
दारणः ४१ इन्द्रो मरुत्वान्मघवा बिडौजाः
पाकशासनः । वृद्धश्रवा श्शुनासीरः पुरुहू
तः पुरन्दरः ४२ जिष्णुर्लेखर्षभ श्शक्र
श्शतमन्युर्दिवस्पतिः । सुत्रामा गोत्रभिद्वज्री
वासवो वृत्रहा वृषा ४३

( षडानन के नाम ) कार्त्तिकेय १ महासेन २ शरज-
न्मा ३ षडानन ४ पार्व्वतीनन्दन ५ स्कन्द ६ सेना-
नी ७ अग्निभू ८ गुह ९ ॥ ४० ॥ बाहुलेय १० तारक
जित ११ विशाख १२ शिखिवाहन १३ षाण्मातुर
१४ शक्तिधर १५ कुमार १६ क्रौञ्चदारण १७ ॥ ४१ ॥
( नन्दीश्वर के नाम ) शृंगी १ भृङ्गी २ रिटि ३ तु-
ण्डी ४ नन्दिक ५ नन्दिकेश्वर ६ ( इन्द्र के नाम )
इन्द्र १ मरुत्वान् २ मघवा ३ बिडौजाः ४ पाकशास
नः ५ वृद्धश्रवाः ६ शुनासीर ७ पुरुहूत ८ पुरन्दर
९ ॥ ४२ ॥ जिष्णु १० लेखर्षभ ११ शक्र १२ शत
मन्यु १३ दिवस्पति १४ सुत्रामा १५ गोत्रभित् १६
वज्री १७ वासव १८ वृत्रहा १९ वृषा २० ॥
४३ ॥ ४३ ॥

वास्तोष्पतिस्सुरपतिर्बलारातिश्शचीपतिः।
जम्भभेदी हरिहयस्स्वाराण्नमुचिसूदनः ४४
संक्रन्दनोदुश्च्यवनस्तुराषाण्मेघवाहनः।
आखण्डलस्सहस्राक्ष ऋभुक्षास्तस्य तु प्रिया ४५
पुलोमजाशचीन्द्राणी नगरी त्वमरावती। हय
उच्चैश्श्रवास्सूतो मातलिर्नन्दनम्वनम् ४६
स्यात्प्रासादो वैजयन्तो जयन्तः पाकशासनिः।
ऐरावतोभ्रमातङ्गैरावणाभ्रमुवल्लभाः ४७
ह्रादिनी वज्रमस्त्री स्यात्कुलिशम्भिदुरम्पविः।
शतकोटिस्स्वरुश्शम्बो दम्भोलिरशनिर्द्वयोः ४८

वास्तोष्पति २१ सुरपति २२ बलाराति २३ शचीपति २४ जम्भभेदी २५ हरिहय २६ स्वाराट २७ नमुचिसूदन २८ ॥४४॥ संक्रन्दन २९ दुश्च्यवन ३० तुराषाट् ३१ मेघवाहन ३२ आखण्डल ३३ सहस्राक्ष ३४ ऋभुक्षाः ३५ ॥४५॥ (इन्द्राणी के नाम) पुलोमजा १ शची २ इन्द्राणी ३ (इन्द्रपुरी का नाम) अमरावती १ (इन्द्र का घोड़ा) उच्चैश्श्रवाः १ (तिसका सारथी) मातलि १ (तिसकी फुलवारी) नन्दन १ ॥४६॥ (तिसका धवरहर) वैजयन्त १ (इन्द्र पुत्र के नाम) जयन्त १ पाकशासनि २ (इन्द्र के हाथी के नाम) ऐरावत १ अभ्रमातंग २ ऐरावण ३ अभ्रमुवल्लभ ४ ॥४७॥ (वज्र के नाम) ह्रादिनी १ वज्र २ कुलिश ३ भिदुर ४ पवि ५ शतकोटि ६ स्वरु ७ शम्ब ८ दम्भोलि ९ अशनि १० ॥४८॥

व्योमयानम्विमानो स्त्री नारदाद्यास्सुरर्षयः।
स्यात्सुधर्म्मा देवसभा पीयूषमन्मृतंसुधा ४९
मन्दाकिनी वियद्गङ्गा स्वर्नदी सुरदीर्घिका।
मेरुस्सुमेरुर्हेमाद्री रत्नसानुस्सुरालयः ५० पञ्चै
ते देवतरवो मन्दारः पारिजातकः। सन्तानःक
ल्पवृक्षश्च पुंसिवा हरिचन्दनम् ५१ सनत्कु-
मारो वैधात्रस्स्वर्व्वैद्यावश्विनीसुतौ। नासत्या
वाश्विनौदस्रावाश्विनेयौचनावुभौ ५२ स्त्रि
यांबहुष्वप्सरसस्स्वर्व्वैश्या उर्व्वशीमुखाः।
हाहाहूहूश्चैवमाद्या गन्धर्व्वास्त्रिदिवौकसाम् ५३

(विमान के नाम) व्योमयान १ विमान २ (सुरर्षियों के नाम) नारदादि १ (देवसभा के नाम) सुधर्म्मा १ देवसभा २ (अमृत के नाम) पीयूष १ अमृत २ सुधा ३ ॥ ४९ ॥ (स्वर्ग गंगा के नाम) मन्दाकिनी १ वियद्गंगा २ स्वर्नदी ३ सुरदीर्घिका ४ (सुमेरु पर्व्वत के नाम) मेरु १ सुमेरु २ हेमाद्रि ३ रत्नसानु ४ सुरालय ५ ॥ ५० ॥ (देववृक्षों के नाम) मन्दार १ पारिजात २ सन्तान १ कल्पवृक्ष १ हरिचन्दन १॥५१ (सनत्कुमार के नाम) सनत्कुमार १ वैधात्र २ (अश्विनीकुमार के नाम) स्वर्व्वैद्य १ अश्विनीसुत २ नासत्य ३ आश्विन ४ दस्र ५ आश्विनेय ६ ॥ ५२ ॥ (अप्सराओं के नाम) अप्सरा १ स्वर्व्वेश्या २ (इनके बहुत नाम हैं) यथा घृताची १ मेनका २ रंभा ३ उर्व्वशी ४ तिलोत्तमा ५ सुकेशी ६ मंजुघोषादि ७ (गंधर्व्वों के नाम) हाहा १ हूहू आदि २ ॥ ५३ ॥

अग्निर्वैश्वानरो वह्नि र्वीतिहोत्रो धनंजयः ।
कृपीटयोनिर्ज्वलनो जातवेदास्तनूनपात् ५४
वर्हिः शुष्मा कृष्णवर्त्मा शोचिः केशउषर्बुधः ।
आश्रयाशो वृहद्भानुः कृशानुः पावकोऽनलः ५५
रोहिताश्वो वायुसखः शिखावानाशुशुक्ष-
णिः । हिरण्यरेता हुतभुग्दहनो हव्यवाहनः ५६
सप्तार्च्चिर्दमुनाः शुक्रश्चित्रभानुर्विभावसुः ।
शुचिरप्पित्तमौर्व्वस्तु वाडवो वडवानलः ५७
वह्नेर्द्वयोर्ज्वालकीलावर्च्चिर्हेतिः शिखा स्त्रियाम् ।
त्रिषु स्फुलिङ्गोऽग्निकणः सन्तापः संज्वरः समौ । ५८

(अग्नि के नाम) अग्नि १ वैश्वानर २ वह्नि ३ वीतिहोत्र ४ धन-
ञ्जय ५ कृपीटयोनि ६ ज्वलन ७ जातवेदाः ८ तनूनपात् ९
॥ ५४ ॥ वर्हिः १० शुष्मा ११ कृष्णवर्त्मा १२ शोचिष्केश १३
उषर्बुध १४ आश्रयाशः १५ वृहद्भानु १६ कृशानु १७ पाव-
क १८ अनल १९ ॥ ५५ ॥ रोहिताश्व २० वायुसख २१ शि-
खावान् २२ आशुशुक्षणि २३ हिरण्यरेताः २४ हुतभुक् २५
दहन २६ हव्यवाहन २७ ॥ ५६ ॥ सप्तार्च्चि २८ दमुनाः २९
शुक्र ३० चित्रभानु ३१ विभावसु ३२ शुचि ३३ अप्पित्त ३४
(वडवानल के नाम) और्व्व १ वाडव २ वडवानल ३ ॥ ५७ ॥
(अग्नि की ज्वाला के नाम) ज्वाल १ कील २ अर्च्चि ३ हेति ४
शिखा ५ (चिनगारी के नाम) स्फुलिङ्ग १ अग्निकण २ (ज्व-
र के नाम) सन्ताप १ संज्वर २ ॥ ५८ ॥

धर्म्मराजः पितृपतिस्समवर्त्ती परेतराट् । कृता-
न्तो यमुनाभ्राता शमनो यमराड्यमः ५९ का-
लो दण्डधरश्श्राद्धदेवो वैवस्वतोऽन्तकः । राक्ष
सः कौणपः क्रव्यात् क्रव्यादोऽस्रप आशरः ६०
रात्रिञ्चरो रात्रिचरः कर्व्वुरो निकषात्मजः ।
यातुधानः पुण्यजनो नैर्ऋतो यातुरक्षसी ६१
प्रचेता वरुणः पाशी यादसाम्पतिरप्पतिः ।
श्वसनस्स्पर्शनो वायुर्मातरिश्वा सदागतिः
६२ पृषदश्वो गन्धवहो गन्धवाहानिलाशुगाः।
समीरमारुतमरुज्जगत्प्राणसमीरणाः ६३

(यम राज के नाम) धर्म्मराज १ पितृपति २ समवर्त्ती ३ परेतराट् ४ कृतान्त ५ यमुनाभ्राता ६ शमन ७ यमराड् ८ यम ९ ॥ ५९ ॥ काल १० दण्डधर ११ श्राद्धदेव १२ वैवस्वत १३ अन्तक १४ (राक्षसों के नाम) राक्षस १ कौणप २ क्रव्यात ३ क्रव्याद ४ अस्रप ५ आशर ६ ॥ ६० ॥ रात्रिञ्चर ७ रात्रिचर ८ कर्व्वुर ९ निकषात्मज १० यातुधान ११ पुण्यजन १२ नैर्ऋत १३ यातु १४ रक्षः १५ ॥ ६१ ॥ (वरुण के नाम) प्रचेताः १ वरुण २ पाशी ३ यादसाम्पति ४ अप्पति ५ (पवन के नाम) श्वसन १ स्पर्शन २ वायु ३ मातरिश्वा ४ सदागति ५ ॥ ६२ ॥ पृषदश्व ६ गन्धवह ७ अनिल ८ आशुग ९ समीर १० मारुत ११ मरुत १२ जगत्प्राण १३ समीरण १४ ॥ ६३ ॥

नभस्वद्वातपवनपवमानप्रभञ्जनाः। प्राणोऽपा
नस्समानश्चोदानव्यानौ च वायवः ६४ शरी
रस्था इमे रंहस्तरसी तु रयस्स्यदः। जवोऽथशी
घ्रं त्वरितं लघु क्षिप्रमरं द्रुतम् ६५ सत्वरं चप
लं तूर्णमविलम्बितमाशु च। सततेनारताश्रा
न्तसन्ततविरतानिशम् ६६ नित्यानवरताज
स्रमप्यथातिशयो भरः। अतिवेलभृशात्यर्था
तिमात्रोद्गाढनिर्भरम् ६७ तीव्रैकान्तनिता
न्तानि गाढबाढदृढानि च। क्लीबे शीघ्राद्यसत्वे
स्यात्त्रिष्वेषां भेद्यगामियत् ६८

नभस्वान् १५ वात १६ पवन १७ पवमान १८ प्रभञ्जन १९ गन्ध
वाह २० (आँधी का नाम) प्रकम्पन १ (वर्षा की आँधी का नाम)
झंझावात १ (हृदय के वायु का नाम) प्राण १ (गुद के वायु का)
नाम) अपान १ (नाभि के वायु का नाम) समान १ (कण्ठ के
वायु का नाम) उदान १ (सर्व्व शरीरस्थ वायु का नाम) व्यान
१ ॥ ६४ ॥ (वेग के नाम) रंहः १ तरः २ रयः ३ स्यदः ४ जव ५ (शी
घ्रता के नाम) शीघ्र १ त्वरित २ लघु ३ क्षिप्र ४ अर ५ द्रुत ६ ॥ ६५ ॥
सत्वर ७ चपल ८ तूर्ण ९ अविलम्बित १० आशु ११ (नित्य के ना-
म) सतत १ अनारत २ अश्रान्त ३ सन्तत ४ अविरत ५ अनिश ६ ॥ ६६
नित्य ७ अनवरत ८ अजस्र ९ (बारम्बार के नाम) अतिशय १ भर २
अतिवेल ३ भृश ४ अत्यर्थ ५ अतिमात्र ६ उद्गाढ ७ निर्भर ८ ॥ ६७ ॥
तीव्र ९ एकान्त १० नितान्त ११ गाढ १२ बाढ १३ दृढ १४ ॥ ६८ ॥

कुवेरस्त्र्यम्बकसखो यक्षराड्गुह्यकेश्वरः। मनुष्यधर्म्मा धनदो राजराजो धनाधिपः ६९ किन्नरेशो वैश्रवणः पौलस्त्यो नरवाहनः। यक्षैकपिङ्गैलविलश्रीदपुण्यजनेश्वराः ७० अस्योद्यानञ्चैत्ररथं पुत्रस्तु नलकूवरः। कैलासस्स्थानमलका पूर्व्विमानं तु पुष्पकम् ७१ स्यात्किन्नरः किम्पुरुषस्तुरङ्गवदनो मयुः। निधिर्न्नाशेवधिर्भेदाः पद्मशङ्खादयो निधेः ७२ इति स्वर्ग्गवर्ग्गः॥

(कुवेर के नाम) कुबेर १ त्र्यम्बकसख २ यक्षराट् ३ गुह्यकेश्वर ४ मनुष्यधर्म्मा ५ धनद ६ राजराज ७ धनाधिप ८ ॥ ६९ ॥ किन्नरेश ९ वैश्रवण १० पौलस्त्य ११ नरवाहन १२ यक्ष १३ एकपिंग १४ ऐलविल १५ श्रीद १६ पुण्यजनेश्वर १७ ॥ ७० ॥ (इन की फुलवारी का नाम) चैत्ररथ १ (इन के पुत्र का नाम) नलकूवर १ (इन के स्थान का नाम) कैलास १ (इन की पुरी का नाम) अलका १ (इन के विमान का नाम) पुष्पक १ ॥ ७१ ॥ (किन्नरों के नाम) किन्नर १ किम्पुरुष २ तुरंगवदन ३ मयु ४ (निधि के नाम) निधि १ शेवधि २ (निधियों के भेद) महापद्म १ पद्म २ शङ्ख ३ मकर ४ कच्छप ५ मुकुन्द ६ कुन्द ७ नील ८ खर्व्व ९ ॥ ७२ ॥ इति स्वर्ग्गवर्ग्गः॥

द्यो दिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम्।
नभोऽन्तरिक्षं गगनमनन्तं सुरवर्त्म खम् १
वियद्विष्णुपदं वा तु पुंस्याकाश विहायसी।
इति व्योमवर्गः॥

दिशास्तु ककुभः काष्ठा आशाश्च हरितश्च ताः
प्राच्यवाची प्रतीच्यस्ताः पूर्व्वदक्षिणपश्चिमाः२
उत्तरादिगुदीची स्याद्दिश्यन्तु त्रिषु दिग्भवे। इन्द्रो
वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् २

(आकाश के नाम) द्यौः १ दिव २ अभ्र ३ व्योम ४ पुष्कर ५ अम्बर ६ नभः ७ अन्तरिक्ष ८ गगन ९ अनन्त १० सुरवर्त्म ११ ख १२॥ १ ॥ वियत् १३ विष्णुपद १४ आकाश १५ विहायः १६ विहायस् १७ नाक १८ द्युः १९ ॥ इति व्योमवर्गः॥

(दिशाओं के नाम) दिक् १ ककुब् २ काष्ठा ३ आशा ४ हरित ५ (पूर्व्व दिशा का नाम) प्राची १ (दक्षिण दिशा का नाम) अवाची १ (पश्चिम का नाम) प्रतीची १॥ १॥ (उत्तर का नाम) उदीची १ (दिशोत्पन्न वस्तु का नाम) दिश्य १ (दक्षिण दिशोत्पन्न) अवाचीन १ (उत्तरोत्पन्न) उदीचीन १ (पश्चिमोद्भव) प्रतीचीन १ (पूर्व्वभव) प्राचीन १ पूर्व्वादि दिगीश (पू०) इन्द्र (आ०) अग्नि (द०) यमराज (नै०) नैऋत (प०) वरुण (वा०) पवन २ ॥ २ ॥

कुबेर ईशः पतयः पूर्व्वादीनान्दिशां क्रमात्।
ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः ३
पुष्पदन्तः सार्व्वभौमः सुप्रतीकश्च दिग्गजाः।
करिण्योऽभ्रमु कपिला पिङ्गलानुपमाः क्रमात्
त् ४ ताम्रकर्णी शुभ्रदन्ती चाङ्गना चाञ्जनाव-
ती। क्लीवाव्ययं त्वपदिशं दिशोर्मध्ये विदिक्
स्त्रियाम् ५ अभ्यन्तरन्त्वन्तरालं चक्रवालन्तु
मण्डलम्। अभ्रं मेघो वारिवाहः स्तनयित्नुर्ब-
लाहकः ६ धाराधरो जलधरस्तडित्वान्वारिदो-
म्बुभृत्। घनजीमूतमुदिरजलमुग्धूमयोनयः ७

(उ०) कुबेर (ई०) ईश (पूर्व्वादि दिग्गजों के नाम) (पू० ऐराव-
त (आ०) पुण्डरीक (द०) वामन (नै०) कुमुद (प०) अञ्जन ॥३॥
(वा०) पुष्पदन्त (उ०) सार्व्वभौम (ई०) सुप्रतीक क्रमसे इ-
न की स्त्रियां येहैं (पू०) अभ्रमु (आ०) कपिला (द०) पिङ्गला
(नै०) अनुपमा ॥ ४ ॥ (प०) ताम्रकर्णी १ (वा०) शुभ्रदन्ती १ (उ०)
अंगना २ (ई०) अञ्जनावती १ (कोणों के नाम) अपदिश १ वि-
दिक् २ ॥ ५ ॥ (बीच के नाम) अभ्यन्तर १ अन्तराल २ (घेरा
के नाम) चक्रवाल १ मण्डल २ (बादर के नाम) अभ्र १
मेघ २ (वारिवाह) ३ स्तनयित्नु ४ बलाहक ५ ॥ ६ ॥ धारा-
धर ६ जलधर ७ तडित्वान् ८ वारिद ९ अम्बुभृत् १०
घन ११ जीमूत १२ मुदिर १३ जलमुक् १४ धूमयोनि
१५ ॥ ७ ॥

कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियम् । स्तनितं गर्ज्जितं मेघनिर्घोषे रसितादि च ८ शम्पाशतह्रदा ह्रादिन्यैरावत्यः क्षणप्रभा । तडित्सौदामिनी विद्युच्चञ्चला चपलापि च ९ स्फूर्ज्जथुर्व्वज्रनिर्घोषो मेघज्योतिरिरम्मदः । इन्द्रायुधं शक्रधनुस्तदेव ऋजुरोहितम् १० वृष्टिर्व्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ । धारासम्पात आसारः शीकरोऽम्बुकणाः स्मृताः ११ वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्द्दिनम् । अन्तर्द्धा व्यवधा पुंसि त्वन्तर्द्धिरपवारणम् १२

(मेघ पंक्ति के नाम) कादम्बिनी १ मेघमाला २ (मेघोत्पन्न वस्तु के नाम) अभ्रिय १ (गर्ज्जने के नाम) स्तनित १ गर्ज्जित २ रसित ३ ॥ ८ ॥ (बिजुली के नाम) शम्पा १ शतह्रदा २ ह्रादिनी ३ ऐरावती ४ क्षणप्रभा ५ तडित् ६ सौदामिनी ७ विद्युत् ८ चञ्चला ९ चपला १० ॥ ९ ॥ (वज्र के शब्द के नाम) स्फूर्ज्जथु १ वज्रनिर्घोष २ (वज्र के अग्नि के नाम) मेघज्योति १ इरम्मद २ (इन्द्रधनुष के नाम) इन्द्रायुध १ शक्रधनु २ ऋजुरोहित ३ ॥ १० ॥ (वर्षा के नाम) वृष्टि १ वर्ष २ (झूरा के नाम) अवग्राह १ अवग्रह २ (निरन्तर मेघधारा के नाम) धारासम्पात १ आसार २ (फुहारा का नाम) शीकर १ ॥ ११ ॥ (आकाश से गिरे हुये पत्थरों के नाम) वर्षोपल १ करका २ (बद्दरी का नाम) दुर्द्दिन १ (झंपना के नाम) अन्तर्द्धा १ व्यवधा २ अन्तर्द्धि ३ अपवारण ४ ॥ १२ ॥

अपिधानतिरोधानपिधानाच्छादनानि च। हि-
मांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः २३
विधुस्सुधांशुश्शुभ्रांशुरोषधीशो निशापतिः।
अब्जो जैवातृकस्सोमो ग्लौर्मृगाङ्कः कलानिधिः
२४ द्विजराजश्शशधरो नक्षत्रेशः क्षपाकरः क-
ला तु षोडशो भागो बिम्बोऽस्त्री मण्डलन्त्रिषु २५
भित्तं शकलखण्डे वा पुंस्यर्द्धोऽर्द्धं समेंऽशके। च-
न्द्रिका कौमुदी ज्योत्स्ना प्रसादस्तु प्रसन्नता २६ क-
लङ्काङ्कौ लाञ्छनञ्च चिह्नं लक्ष्म च लक्षणम् सुष-
मा परमा शोभा शोभा कान्तिर्द्युतिश्छविः २७

अपिधान ५ तिरोधान ६ पिधान ७ आच्छादन ८ (चन्द्रमा के नाम) हिमांशु १ चन्द्रमा २ चन्द्र ३ इन्दु ४ कुमुदबान्धव ५ ॥ २३ ॥ विधु ६ सुधांशु ७ शुभ्रांशु ८ ओषधीश ९ निशापति १० अब्ज ११ जैवातृक १२ सोम १३ ग्लौ १४ मृगाङ्क १५ कलानिधि १६ ॥ २४ ॥ द्विजराज १७ शशधर १८ नक्षत्रेश १९ क्षपाकर २० (चन्द्र के १६ का नाम) कला १ (चन्द्र मण्डल के नाम) बिम्ब १ मण्डल २ ॥ २५ ॥ (खण्ड के नाम) भित्त १ शकल २ खण्ड ३ अर्द्ध ४ (समभाग का नाम) अर्द्धम् १ (उजियरिया के नाम) चन्द्रिका १ कौमुदी २ ज्योत्स्ना ३ (निर्मलता के नाम) प्रसाद १ प्रसन्नता २ ॥ २६ ॥ (चिन्ह के नाम) कलङ्क १ अङ्क २ लांछन ३ चिह्न ४ लक्ष्म ५ लक्षण ६ (अति शोभा का नाम सुखमा १ शोभा के नाम) शोभा १ कान्ति २ द्युति ३ छवि ४ ॥ २७

अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्। प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः १८ शीतं गुणे तद्वदर्थास्सुषीमश्शिशिरो जड़ः। तुषारश्शीतलश्शीतो हिमस्सप्तान्यलिङ्गकाः १९ ध्रुव औत्तानपादिस्स्यादगस्त्यः कुम्भसम्भवः। मैत्रावरुणिरस्यैव लोपामुद्रा सधर्म्मिणी २० नक्षत्रमृक्षं भं तारा तारकाप्युडु वा स्त्रियाम्। दाक्षायण्योऽश्विनीत्यादि तारा अश्वयुगश्विनी २१ राधा विशाखा पुष्ये तु सिध्यतिष्यौ श्रविष्ठया। समा धनिष्ठा स्युः प्रोष्ठपदा भाद्रपदा स्त्रियाम् २२

(पाला के नाम) अवश्याय १ नीहार २ तुषार ३ तुहिन ४ हिम ५ प्रालेय ६ मिहिका ७ (महा पाला के नाम) हिमानी १ हिमसंहति २ ॥ १८ ॥ (जाड़ के नाम) सुषीम १ शिशिर २ जड़ ३ तुषार ४ शीतल ५ शीत ६ हिम ७ ॥ १९ ॥ (ध्रुव के नाम) ध्रुव १ औत्तानपादि २ (अगस्त्य के नाम) अगस्त्य १ कुम्भसम्भव २ मैत्रावरुणि ३ (अगस्त्य की स्त्री का नाम) लोपामुद्रा १ ॥ २० ॥ (नक्षत्रों के नाम) नक्षत्र १ ऋक्ष २ भ ३ तारा ४ तारका ५ उडु ६ (अश्विन्यादि का नाम) दाक्षायणी १ (अश्विनी के नाम) अश्वयुक् १ अश्विनी २ ॥ २१ ॥ (विशाखा के नाम) राधा १ विशाखा २ (पुष्य के नाम) पुष्य १ तिष्य २ सिध्य ३ (धनिष्ठा के नाम) श्रविष्ठा १ धनिष्ठा २ (पूर्व भाद्रपदा उत्तर भाद्रपदा के नाम) प्रोष्ठपदा १ भाद्रपदा २ ॥ २२ ॥

मृगशीर्षं मृगशिरस्तस्मिन्नेवाग्रहायणी । इल्व
लास्तच्छिरोदेशे तारका निवसन्ति याः २३ बृह
स्पतिः सुराचार्यो गीष्पतिर्धिषणो गुरुः । जीव आ
ङ्गिरसो वाचस्पतिश्चित्रशिखण्डिजः २४ शुक्रो
दैत्यगुरुः काव्य उशना भार्गवः कविः । अङ्गारकः
कुजो भौमो लोहिताङ्गो महीसुतः २५ रौहिणेयो
बुधः सौम्यः समौ सौरिशनैश्चरौ । तमस्तु राहुः स्व
र्भानुः सैंहिकेयो विधुन्तुदः २६ सप्तर्षयो मरीच्य
त्रिमुखाश्चित्रशिखण्डिनः । राशीनामुदयो लग्नं
ते तु मेषवृषादयः २७

(मृगशिर के नाम) मृगशीर्ष १ मृगशिर २ इस्की पूर्णिमा आग्रहायणी १ (मृगशिर के मस्तक पर रहने वाले नक्षत्रों के नाम) इल्वल १ ॥ २३ ॥ (बृहस्पति के नाम) बृहस्पति १ सुराचार्य २ गीष्पति ३ धिषण ४ गुरु ५ जीव ६ आंगिरस ७ वाचस्पति ८ चित्रशिखण्डिज ९ ॥ २४ ॥ (शुक्र के नाम) शुक्र १ दैत्यगुरु २ काव्य ३ उशना ४ भार्गव ५ कवि ६ (मंगल के नाम) अंगारक १ कुज २ भौम ३ लोहितांग ४ महीसुत ५ ॥ २५ ॥ (बुध के नाम) रौहिणेय १ बुध २ सौम्य ३ (शनि के नाम) सौरि १ शनैश्चर २ (राहु के नाम) तमः १ राहु २ स्वर्भानु ३ सैंहिकेय ४ विधुन्तुद ५ ॥ २६ ॥ (मरीचि अंगिरा अत्रि पुलस्त्य पुलह क्रतु वशिष्ठ इन सप्तर्षियों का नाम) चित्रशिखण्डी १ (राशि के उदय का नाम) लग्न १ (राशियों के नाम) मेष १ वृष २ मिथुन ३ कर्क ४ सिंह ५ कन्या ६ तुला ७ वृश्चिक ८ धन ९ मकर १० कुंभ ११ मीन १२ ॥ २७ ॥

सूरस्सूर्य्योर्य्यमादित्या द्वादशात्मा दिवाकराः । भास्करा
हस्करब्रध्नप्रभाकरविभाकराः २८ भास्वद्विव
स्वत्सप्ताश्व हरिदश्वोष्णा रश्मयः । विकर्त्तनार्क
मार्त्तण्डमिहिरारुणपूषणः २९ द्युमणिस्तर-
णिर्म्मित्रश्चित्रभानुर्व्विरोचनः । विभावसुर्ग्र
हपतिस्त्विषाम्पतिरहर्प्पतिः ३० भानुर्हंसस्स
हस्रांशुस्तपनस्सविता रविः । माठरः पिङ्गलो
दण्डश्चण्डांशोः पारिपार्श्विकाः ३१

(सूर्य्य के नाम) सूर १ सूर्य्य २ अर्य्यमा ३ आदित्य ४ द्वादशा-
त्मा ५ दिवाकर ६ भास्कर ७ अहस्कर ८ ब्रध्न ९ प्रभाकर १०
विभाकर ११ ॥ २८ ॥ भास्वान् १२ विवस्वान् १३ सप्ताश्व
१४ हरिदश्व १५ उष्णरश्मि १६ विकर्त्तन १७ अर्क १८ मा-
र्त्तण्ड १९ मिहिर २० अरुण २१ पूषा २२ ॥ २९ ॥ द्युमणि २३
तरणि २४ मित्र २५ चित्रभानु २६ विरोचन २७ विभावसु २८
ग्रहपति २९ त्विषाम्पति ३० अहर्प्पति ३१ ॥ ३० ॥ भानु ३२
हंस ३३ सहस्रांशु ३४ तपन ३५ सविता ३६ रवि ३७ कर्म्म
साक्षी ३८ जगच्चक्षु ३९ लोकबन्धु ४० त्रयीतनु ४१ प्रद्योत-
न ४२ दिनमणि ४३ खद्योत ४४ लोकबान्धव ४५ इन ४६
भग ४७ धामनिधि ४८ अंशुमाली ४९ अब्जिनीपति ५०
(सूर्य्यपार्श्ववर्त्तियों के नाम) माठर १ पिङ्गल २ दण्ड ३
॥ ३१ ॥

सूतः सूतोऽरुणोऽनूरुः काश्यपिर्गरुडाग्रजः। परिवेषस्तु परिधिरुपसूर्य्यकमण्डले ३२ किरणोऽस्रमयूखांशुगभस्तिघृणिरश्मयः। भानुः करोमरीचिस्स्त्रीपुंसयोर्दीधितिस्त्रियाम ३३ स्युःप्रभारुग्रुचिस्त्विड्भाभास्छविद्युति दीप्तयः। रोचिः शोचिरुभेक्लीबे प्रकाशो द्योत आतपः ३४ कोष्णङ्कवोष्णम्मन्दोष्णङ्कदुष्णन्त्रिषुतद्वति। तिग्मन्तीक्ष्णङ्खरन्तद्वन्मृगतृष्णा मरीचिका ३५ इति दिग्वर्गः ॥

( सूर्य्य के सारथि के नाम ) सूर सूत १ अरुण २ अनूरु ३ काश्यपि ४ गरुडाग्रज ५ ( सूर्य्य के मण्डल के अर्थात् जो कभी २ उन के चारों ओर घेरा सा बन जाता है उस के नाम ) परिवेष १ परिधि २ उपसूर्य्यक ३ मण्डल ४ ॥ ३२ ॥ ( सूर्य्य किरण के नाम ) किरण १ उस्र २ मयूख ३ अंशु ४ गभस्ति ५ घृणि ६ रश्मि ७ भानु ८ कर ९ मरीचि १० दीधिति ११ ॥ ३३ ॥ ( दीप्ति के नाम ) प्रभा १ रुक् २ रुचि ३ त्विट् ४ भा ५ भाः ६ छवि ७ द्युति ८ दीप्ति ९ रोचि १० शोचि ११ ( घाम के नाम ) प्रकाश १ द्योत २ आतप ३ ॥ ३४ ॥ ( थोड़े गर्म्मी के नाम ) कोष्ण १ कवोष्ण २ मन्दोष्ण ३ कदुष्ण ४ ( बहुत गर्म्मी के नाम ) तिग्म १ तीक्ष्ण २ खर ३ ( दो पहर की झल झलाहट के नाम ) मृगतृष्णा १ मरीचिका २ ॥ ३५ ॥ इति दिग्वर्गः ॥

कालो दिष्टोऽप्यनेहापि समयोऽप्यथ पक्षतिः ।
प्रतिपद् द्वे इमे स्त्रीत्वे तदाद्यास्तिथयो द्वयोः १ ॥
घस्रो दिनाहनी वा तु क्लीबे दिवसवासरौ । प्र-
त्यूषोऽहर्मुखं कल्यमुषःप्रत्यूषसी अपि २ प्र-
भातञ्च दिनान्ते तु सायं सन्ध्या पितृप्रसूः । प्रा-
ह्णापराह्णमध्याह्नास्त्रिसन्ध्यमथ शर्वरी ३
निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा ।
विभावरीतमस्विन्यौ रजनी यामिनी तमी ४ तमि-
स्रा तामसी रात्रि ज्यौत्स्नी चन्द्रिकयान्विता । आ-
गामिवर्त्तमानाहर्युक्तायां निशि पक्षिणी ५

(समय के नाम) काल १ दिष्ट २ अनेहा ३ समय ४ (परिवा के नाम) पक्षति १ प्रतिपत् २ (प्रतिपदादि का नाम) तिथि १ ॥ १ ॥ (दिन के नाम) घस्र १ दिन २ अहः ३ दिवस ४ वासर ५ (प्रातःकाल के नाम) प्रत्यूष १ अहर्म्मुख २ कल्य ३ उषः ४ प्रत्यूषः ५ ॥ २ ॥ प्रभात ६ (सन्ध्या के नाम) दिनान्त १ सायम् २ सन्ध्या ३ पितृप्रसू ४ (प्रातस्सन्ध्या का नाम) प्राह्ण १ (मध्याह्न संध्या का नाम) मध्याह्न १ (सायं सन्ध्या का नाम) अपराह्ण १ (इन ३ सन्ध्याओं का नाम) त्रिसन्ध्या १ (रात्रि के नाम) शार्व्वरी १ ॥ ३ ॥ निशा २ निशीथिनी ३ रात्रि ४ त्रियामा ५ क्षणदा ६ क्षपा ७ विभावरी ८ तमस्विनी ९ रजनी १० रजनि ११ यामिनी १२ तमी १३ तमा १४ तमि १५ ॥ ४ ॥ अन्धियारी रात्रि का नाम तमिस्रा १ (उजियारी रात्रि का नाम) ज्योत्स्नी १ (वर्त्तमान और आगामुक दिन रात्रि का नाम) पक्षिणी १ ॥ ५ ॥

गणरात्रन्निशाबह्व्यः प्रदोषोरजनीमुखम्। अ-
र्द्धरात्रनिशीथौ द्वौ द्वौ यामप्रहरौ समौ ६ स पर्व्व
सन्धिः प्रतिपत्पञ्चदश्योर्य्यदन्तरम्। पक्षान्तौ
पञ्चदश्यौ द्वे पौर्णमासी तु पूर्णिमा ७ कला
हीने सानुमतिः पूर्णे राका निशाकरे। अमावा
स्यात्वमावस्या दर्शस्सूर्य्येन्दुसङ्गमः ८ सा-
दृष्टेन्दुस्सिनीवाली सानष्टेन्दुःकलाकुहूः।
उपरागो ग्रहो राहुग्रस्ते त्विन्दौ च पूष्णि च ९ सो-
पप्लवोपरक्तौ द्वावग्न्युत्पात उपाहितः। एकयो
क्त्या पुष्पवन्तौ दिवाकरनिशाकरौ १०

(बहुत रात्रियों के नाम) गणरात्र १ (रात्रि के प्रथम भाग के नाम)
प्रदोष १ रजनीमुख २ (आधी रात्रि के नाम) अर्द्धरात्र १ निशीथ २
(प्रहर के नाम) याम १ प्रहर २॥ ६॥ (प्रतिपत् पंचदशी के अन्तर के योग
के नाम) पर्व्व वा पर्व्व सन्धि २ (अमावास्या और पौर्णमासी के
नाम) पक्षान्त १ पञ्चदशी २ (पौर्णमासी के नाम) पौर्णमासी १
पूर्णिमा २॥ ७॥ (कला हीन पूर्णिमा का नाम) अनुमति १ (कलास-
हित पूर्णिमा का नाम) राका १ (अमावास्या के नाम) अमावास्या १ अ-
मावस्या २ अमावसी ३ अमावासी ४ अमामासी ५ अमामसी ६ अमा
७ दर्श ८ सूर्य्येन्दुसङ्गम ९॥ ८॥ (चतुर्द्दशी के दिन की अमावास्या
का नाम) सिनीवाली १ (परा अमावस्या के नाम) कुहू १ कुहु २ (ग्र-
हण के नाम) उपराग १ ग्रह २॥ ९॥ सोपप्लव ३ उपरक्त ४ (धूमकेतु
के नाम) अग्न्युत्पात १ उपाहित २ (सूर्य्य चन्द्र दोनों के एकत्र रहने
का नाम) पुष्पवन्तौ १॥ १०॥

अष्टादश निमेषास्तु काष्ठा त्रिंशत्तु ताः कला।
तास्तु त्रिंशत्क्षणस्ते तु मुहूर्तो द्वादशास्त्रिया
म् २१ ते तु त्रिंशदहोरात्रः पक्षस्ते दश पञ्च च।
पक्षौ पूर्वापरौ शुक्लकृष्णौ मासस्तु तावुभौ २२
द्वौ द्वौ माघादिमासौ स्यादृतुस्तैरयनं त्रिभिः।
अयने द्वे गतिरुदग्दक्षिणार्कस्य वत्सरः २३
समरात्रिन्दिवे काले विषुवद्विषुवच्च तत्। मार्ग
शीर्षे सहा मार्ग आग्रहायणिकश्च सः २४ पौ-
षे तैषसहस्यौ द्वौ तपा माघेऽथ फाल्गुने। स्यात्त
पस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुः २५

(पलक मारने का नाम) निमेष १ (१८ निमेष का नाम) काष्ठा १ (३० काष्ठा का नाम) कला १ (३० कला का नाम) क्षण १ (१२ क्षण का नाम) मुहूर्त १ ॥ २१ ॥ (३० मुहूर्त का नाम) अहोरात्र १ (१५ अहोरात्र का नाम) पक्ष १ पक्ष दो हैं शुक्ल १ कृष्ण २ (२ पक्ष का नाम) मास १ (२ मास का नाम) ऋतु १ (३ ऋतु का नाम) अयन १ ॥ २२ ॥ (अयन दो हैं दक्षिणायन १ उत्तरायण २ (२ अयन का नाम) वत्सर १ ॥ २३ ॥ (तुला मेष संक्रान्ति के नाम) विषुवत् १ विषुव २ (अगहन के नाम) मार्गशीर्ष १ सहाः २ मार्ग ३ आग्रहायणिक ४ ॥ २४ ॥ (पूस के नाम) पौष १ तैष २ सहस्य ३ (माघ के नाम) तपाः १ माघ २ (फाल्गुन के नाम) फाल्गुन १ तपस्य २ फाल्गुनिक ३ (चैत्र के नाम) चैत्र १ चैत्रिक २ मधु ३ ॥ २५ ॥

वैशाखे माधवो राधो ज्येष्ठे शुक्रः शुचिस्त्वयम् ।
आषाढे श्रावणे तु स्यान्नभाः श्रावणिकश्च सः
२६ स्युर्नभस्यप्रौष्ठपदभाद्रभाद्रपदाः समाः ।
स्यादाश्विन इषोप्याश्वयुजोपि स्यात्तु कार्तिके
२७ बाहुलोर्जौ कार्तिकिको हेमन्तः शिशिरोस्त्रिया
म् । वसन्ते पुष्पसमयः सुरभिर्ग्रीष्म ऊष्मकः २८
निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः । स्त्रि-
यां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत्स्त्रियाम्
२९ षडमी ऋतवः पुंसि मार्गादीनां युगैः क्रमा-
त् । संवत्सरो वत्सरोऽब्दो हायनोस्त्री शरत्समाः ३०

(वैशाख के नाम) वैशाख १ माधव २ राध ३ (ज्येष्ठ के नाम) ज्येष्ठ १ शुक्र २ (आषाढ के नाम) शुचि १ आषाढ २ (श्रावण के नाम) श्रावण १ नभाः २ श्रावणिक ३ ॥ २६ ॥ (भादों के नाम) नभस्य १ प्रोष्ठपद २ भाद्र ३ भाद्रपद ४ (क्वार के नाम) आश्विन १ इष २ आश्वयुज ३ (कार्त्तिक के नाम) कार्तिक १ ॥ २७ ॥ बाहुल २ ऊर्ज ३ कार्तिकिक ४ (अगहन पूस का नाम) हेमन्त १ (माघ फाल्गुन का नाम) शिशिर १ (चैत्र बैशाख के नाम) बसन्त १ पुष्पसमय २ सुरभि ३ (ज्येष्ठ आषाढ के समय का नाम) ग्रीष्म १ ऊष्मक २ ॥ २८ ॥ निदाघ ३ उष्णोपगम ४ उष्ण ५ ऊष्मागम ६ तप ७ (वर्षा ऋतु के नाम) प्रावृट् १ वर्षा २ (क्वार कार्तिक का नाम) शरद् १ ॥ २९ ॥ (वर्ष के नाम) संवत्सर १ वत्सर २ अब्द ३ हायन ४ शरत् ५ समा ६ ॥ ३० ॥

मासेनस्यादहोरात्रः पैत्रो वर्षेण दैवतः । दैवेयु-
गसहस्रेद्वे ब्राह्मः कल्पौतुतौनृणाम् २१ म-
न्वन्तरन्तुदिव्यानां युगानामेकसप्ततिः । सम्ब
र्त्तःप्रलयःकल्पः क्षयःकल्पान्त इत्यपि २२
अस्त्रीपङ्कं पुमान्पाप्मा पापङ्किल्बिषकल्मष
म्। कलुषम्वृजिनैनोघ मंहोदुरितदुष्कृतम् २३
स्याद्धर्ममस्त्रियाम्पुण्य श्रेयसीसुकृतम्वृषः।
मुत्प्रीतिःप्रमदोहर्ष प्रमोदामोदसम्मदाः २४ स्या
दानन्दथुरानन्द श्शर्मशातसुखानिच ।श्वःश्रे
यसंशिवम्भद्रङ्कल्याणम्मङ्गलंशुभम् २५

मनुष्य के एक महीने का पितरों का दिन रात्रि जानों और १ वर्ष का देवताओं का दिन रात्रि सम. जो देवों के चतुर्युग सहस्र का ब्रह्मा का दिन रात्रि होता है जिसे कल्प कहते हैं ॥ २१ ॥ (देवताओं के ३६० दिन रात्रि का नाम) १ दिव्य वर्ष १२००० दिव्य वर्ष का मनुष्यों का चतुर्युग होता है (७१ दिव्य वर्ष का नाम) मन्वन्तर १ (प्रलय के नाम) संवर्त्त १ प्रलय २ कल्प ३ क्षय ४ कल्पान्त ५ ॥ २२ ॥ (पाप के नाम) पंक १ पाप्मा २ पाप ३ किल्बिष ४ कल्मष ५ कलुष ६ वृजिन ७ एन ८ अघ ९ अंह १० दुरित ११ दुष्कृत १२ ॥ २३ (धर्म के नाम) धर्म १ पुण्य २ श्रेयः ३ सुकृत ४ वृष ५ (हर्ष के नाम) मुत् १ प्रीति २ प्रमद ३ हर्ष ४ प्रमोद ५ आमोद ६ सम्मद ७ ॥ २४ ॥ आनन्दथु ८ आनन्द ९ शर्म १० शात ११ सुख १२ (कल्याण के नाम) श्वःश्रेयस १ शिव २ भद्र ३ कल्याण ४ मंगल ५ शुभ ६ ॥ २५ ॥

भावुकम्भविकम्भव्यं कुशलंक्षेममस्त्रियाम्।
शस्तञ्चाथत्रिषुद्रव्ये पापम्पुरायंसुखादिच २६
मतल्लिकामचर्चिका प्रकाराडमुद्धतल्लजौ।
प्रशस्तवाचकान्यमून्ययमश्शुभावहोविधिः २७
दैवंदिष्टम्भागधेयम्भाग्यं स्त्रीनियतिर्विधिः।
हेतुर्नाकारणम्बीजन्निदानन्त्वादिकारणम् २८
क्षेत्रज्ञ आत्मा पुरुषः प्रधानम्प्रकृतिः स्त्रियाम्।
विशेषःकालिकोवस्थागुणाः सत्त्वंरजस्तमः २९
जनुर्जननजन्मानि जनिरुत्पत्तिरुद्भवः। प्राणी
तु चेतनोजन्मीजन्तुजन्युशरीरिणः ३०

भावुक ७ भविक ८ भव्य ९ कुशल १० क्षेम ११ शस्त १२॥ २६॥ २ (अच्छे के नाम) मतल्लिका १ मचर्चिका २ प्रकाराड ३ उद्ध ४ तल्लज ५ (शुभद का नाम) अय १॥ २७॥ (भाग्य के नाम) दैव १ दिष्ट २ भागधेय ३ भाग्य ४ नियति ५ विधि ६ (कारण के नाम) हेतु १ कारण २ बीज ३ (आदि कारण का नाम) निदान १॥ ॥ २८॥ (चैतन्य पुरुष के नाम) क्षेत्रज्ञ १ आत्मा २ पुरुष ३ (प्रकृति के नाम) प्रधान १ प्रकृति २ (उमरका नाम) अवस्था १ (गुणों के नाम) सत्त्व १ रजः २ तमः ३॥ २९॥ (जन्म के नाम) जनु १ जनन २ जन्म ३ जनि ४ उत्पत्ति ५ उद्भव ६ (प्राणी के नाम) प्राणी १ चेतन २ जन्मी ३ जन्तु ४ जन्यु ५ शरीरी ६ ॥ ३०॥

जातिर्जातञ्च सामान्यम्व्यक्तिस्तु पृथगात्मता॥ चित्तन्तु चेतो हृदयं स्वान्तं हृन्मानसम्मनः ३१

इति कालवर्गः॥

बुद्धिर्म्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः प्रेक्षोपलब्धिश्चित्सम्वित्प्रतिपज्ज्ञप्तिचेतनाः १ धीर्धारणावती मेधा सङ्कल्पः कर्म्म मानसम्। चित्ताभोगो मनस्कारश्चर्चा संख्या विचारणा २ अध्याहारस्तर्क ऊहो विचिकित्सा तु संशयः। सन्देहद्वापरौ चाथ समौ निर्णयनिश्चयौ ३

(जाति मात्र के नाम) जाति १ जात २ सामान्य ३ (व्यक्ति वाचक के नाम) व्यक्ति १ पृथगात्मता २ (चित्त के नाम) चित्त १ चेतः २ हृदय ३ स्वान्त ४ हृत् ५ मानस ६ मनः ७॥ ३१॥

इति कालवर्गः

(बुद्धि के नाम) बुद्धि १ मनीषा २ धिषणा ३ धी ४ प्रज्ञा ५ शेमुषी ६ मति ७ प्रेक्षा ८ उपलब्धि ९ चित् १० संवित् ११ प्रतिपत् १२ ज्ञप्ति १३ चेतना १४॥ १॥ (धारणावती बुद्धि का नाम) मेधा १ (मन के काम का नाम) संकल्प १ (चित्त की पूर्णता के नाम) चित्ताभोग १ मनस्कार २ (विचार के नाम) चर्चा १ संख्या २ विचारणा ३॥ २॥ (अपूर्व्व विचार के नाम) अध्याहार १ तर्क २ ऊह ३ (संशय के नाम) विचिकित्सा १ संशय २ संदेह ३ द्वापर ४ (निश्चय के नाम) निर्णय १ निश्चय २॥ ३॥

मिथ्या दृष्टिर्नास्तिकता व्यापादो द्रोह चिन्तनम्।
समौ सिद्धान्त राद्धान्तौ भ्रान्तिर्मिथ्यामतिर्भ्रमः ४
सम्विदागूः प्रतिज्ञान न्नियमाश्रव संश्रवाः। अ-
ङ्गीकाराभ्युपगम प्रतिश्रव समाधयः ५ मोक्षेधी-
र्ज्ञानमन्यत्र विज्ञानं शिल्प शास्त्रयोः। मुक्तिःकै-
वल्य निर्वाण श्रेयो निश्श्रेयसामृतम् ६ मोक्षो
पवर्गो थाज्ञान मविद्या हम्मतिस्स्त्रियाम्। रूपं
शब्दो गन्धरसस्पर्शाश्च विषयाअमी ७ गोच
राइन्द्रियार्थाश्च हृषीकन्विषयीन्द्रियम्। क-
र्मेन्द्रियन्तु पाय्वादि मनोनेत्रादि धीन्द्रियम् ८

(परलोक मिथ्या समझने का नाम) मिथ्या दृष्टि १ नास्तिक-
ता २ (पर द्रोह के नाम) व्यापाद १ द्रोह चिंतन २ (सिद्ध होने
के नाम) सिद्धान्त १ राद्धांत २ (भ्रम के नाम) भ्रांति १ मिथ्याम-
ति २ भ्रम ३ ॥ ४॥ (अंगीकार के नाम) संवित् १ आगू २ प्रति
ज्ञान ३ नियम ४ आश्रव ५ संश्रव ६ अंगीकार ७ अभ्युपग
म ८ प्रतिश्रव ९ समाधि १० ॥ ५॥ (मोक्ष में बुद्धि लगाने का
नाम) ज्ञान १ (मोक्ष में बाहर बुद्धि लगाने का नाम) विज्ञान १
(मोक्ष के नाम) मुक्ति १ कैवल्य २ निर्वाण ३ श्रेयः ४ निश्श्रेय-
स ५ अमृत ६ ॥ ६॥ मोक्ष ७ अपवर्ग ८ (अज्ञान के नाम)
अज्ञान १ अविद्या २ अहम्मति ३ (पञ्च विषयों के नाम) रूप १
रस १ शब्द १ गन्ध १ स्पर्श १ ॥ ७॥ इन्द्रिय के नाम, हृषीक १ वि-
षयी २ इंद्रिय ३ (कर्मेन्द्रियों के नाम) गुद १ लिंग १ हस्त १ पाद १
वाणी १ (ज्ञानेन्द्रियों के नाम) मनः १ कर्ण १ नेत्र १ जिह्वा १ त्वचा १ ना-
सिका १ ॥ ८॥

तुवरस्तु कषायोस्त्री मधुरो लवणः कटुः । तिक्तो
ऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु ९ विमर्दो-
त्थे परिमलो गन्धे जनमनोहरे । आमोदस्सोति-
निर्हारी वाच्यलिङ्ग-त्वमागुणात् १० समाकर्षी
तु निर्हारी सुरभि र्घ्राणतर्पणः । इष्टगन्धस्सुग
न्धिस्स्यादामोदी मुखवासनः ११ पूतिगन्धि
स्तु दुर्गन्धो विस्रं स्यादामगन्धियत् । शुक्लशु
भ्र शुचिश्वेतविशदश्येतपाण्डराः १२ अवदात
स्सितोगौरोऽवलक्षो धवलोऽर्ज्जुनः । हरिणः
पाण्डुरःपाण्डुरी पत्पाण्डुस्तु धूसरः १३

(कसैला रस के नाम) तुवर १ कषाय २ हरीत्यादि ॥ (अन्य रसों के नाम) मधुर १ जलादि ॥ लवण १ सैंधवादि ॥ कटु १ मरीचादि ॥ तिक्त निम्बादि ॥ अम्ल १ अम्लादि ॥ ९ ॥ (बकुल पुष्पगन्धि का नाम) परिमल १ (कस्तूरी गन्धि का नाम) आमोद १ ॥ १० ॥ (दूर ही से जिसकी गन्धि आवे उसके नाम) समाकर्षी १ निर्हारी २ (अत्यु-त्तम गन्ध के नाम) सुरभि १ घ्राणतर्पण २ इष्टगन्ध ३ सुगन्ध ४ (कर्पूर ताम्बूलादि मुख शोधक गन्ध के नाम) आमोदी १ मुख-वासनः २ ॥ ११ ॥ (दुर्गन्धि के नाम) पूतिगन्धि १ दुर्गन्धि २ (क-च्चे मांसादि के गन्ध का नाम) विस्र १ (उज्ज्वल के नाम) शुक्ल १ शुभ्र २ शुचि ३ श्वेत ४ विशद ५ श्येत ६ पाण्डुर ७ ॥ १२ ॥ अव-दात ८ सित ९ गौर १० अवलक्ष ११ धवल १२ अर्ज्जुन १३ ह-रिण १४ पाण्डुर १५ पाण्डु १६ (किञ्चित उज्ज्वल का नाम) धूसर १ ॥ १३ ॥

कृष्णो नीलासितश्यामकालश्यामलमेचकाः।
पीतो गौरो हरिद्राभः पालाशो हरितो हरित् २४
रोहितो लोहितो रक्तः शोणः कोकनदच्छविः।
अव्यक्तरागस्त्वरुणः श्वेतरक्तस्तु पाटलः २५
श्यावस्स्यात्कपिशो धूम्रधूमलौ कृष्णलोहिते।
कडारः कपिलः पिङ्गपिशङ्गौ कद्रुपिङ्गलौ २६
चित्रं किर्मीरकल्माषशबलैताश्च कर्बुरे। गुणे
शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति २७
इति धीवर्गः॥

ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती।
व्याहार उक्तिर्लपितम्भाषितम्वचनम्वचः १

(काले के नाम) कृष्ण १ नील २ असित ३ श्याम ४ काल ५ श्यामल ६ मेचक ७ (पीले के नाम) पीत १ गौर २ हरिद्राभ ३ (हरे के नाम) पालाश १ हरित २ हरित् ३ ॥ २४ ॥ (लाल के नाम) लोहित १ रोहित २ रक्त ३ (लाल कमल सम रंग का नाम) शोण १ (थोड़े लाल का नाम) अरुण १ (उज्ज्वल लाल मिले हुये का नाम) पाटल १ ॥ २५ ॥ (धूमिले लाले रंग के नाम) श्याव १ कपिश २ (काले मिलित रक्त वर्ण के नाम) धूम्र १ धूमिल २ (कुम्हरे रंग के नाम) कडार १ कपिल २ पिंग ३ पिशंग ४ कद्रु ५ पिंगल ६ ॥ २६ ॥ (चित्र वर्ण अर्थात् किरमिजी के नाम) चित्र १ किर्मीर २ कल्माष ३ शबल ४ एत ५ कर्बुर ६ ॥ २७ ॥ इति धीवर्गः ॥

( बोलने के नाम) ब्राह्मी १ भारती २ भाषा ३ गीः ४ गिरा ५ वाक् ६ वाणी ७ सरस्वती ८ व्याहार ९ उक्ति १० लपित ११ भाषित १२ वचन १३ वचः १४ ॥ १

अपभ्रंशोपशब्दस्स्याच्छास्त्रे शब्दस्तु वाचकः
तिङ्सुबन्तचयो वाक्यङ्क्रिया वा कारकान्वि-
ता १ श्रुतिस्स्त्री वेद आम्नायस्त्रयीधर्म्मस्तुत
द्विधिः । स्त्रियामृक्सामयजुषी इति वेदास्त्रय
स्त्रयी २ शिक्षेत्यादिश्रुतेरङ्गमोङ्कारप्रणवौ
समौ । इतिहासःपुरावृत्तमुदात्ताद्यास्त्रयस्स्व
राः ४ आन्वीक्षिकी दण्डनीतिस्तर्कविद्या-
र्थशास्त्रयोः । आख्यायिकोपलब्धार्थापु-
राणम्पञ्चलक्षणम् ५

(अपध्वंश अर्थात् बिगरे हुये शब्द का नाम) अपभ्रंश १ (व्या-
करण शास्त्रानुसार शुद्ध शब्द का नाम) शब्द १ तिङन्त सुब
न्त के बटोर का नाम) वाक्य १ (कारकान्वित क्रिया का विकल्प क-
रके नाम) वाक्य १॥ २॥ (वेद के नाम) श्रुति १ वेद २ आम्नाय ३ त्रयी
४ (वेद के विधि का नाम) धर्म्म १ (वेदों के नाम) ऋक् १ यजुः २ सा
म १ (इन्हीं का नाम) त्रयी ३ ॥ ३॥ (वेद के ६ अंग ये हैं) शिक्षा १ क-
ल्प १ व्याकरण १ निरुक्त १ ज्योतिषांगति १ छन्दोविचिति १ (ओं-
कार के नाम) ओंकार १ प्रणव २ (इतिहास के नाम) इतिहास १ पुरा
वृत्त २ (उदात्त अनुदात्त स्वरित का नाम) स्वर १॥ ४ ॥ (तर्क विद्या
का नाम) आन्वीक्षिकी १ (अर्थ शास्त्र का नाम) दण्डनीति १ (अनु
भव के नाम) आख्यायिका १ उपलब्धार्था २ (पंच लक्षण जिसमें
हों उसका नाम) पुराण १ (पंच लक्षण ये हैं) सर्ग १ प्रतिसर्ग २ वं-
श वर्णन ३ मन्वन्तर कथा ४ वंशानुचरित ५ ॥ ५ ॥

प्रबन्धकल्पनाकथा प्रवल्हिका प्रहेलिका। स्मृ
तिस्तुधर्म्मसंहिता समाहृतिस्तुसंग्रहः ६
समस्यातुसमासार्थ्या किंवदन्तीजनश्रुतिः२८
वार्त्ताप्रवृत्तिर्वृत्तान्त उदन्तस्स्यादथाह्वयः ७ आ
ख्याह्वे अभिधानञ्च नामधेयञ्च नामच। हूति
राकारणाह्वानं संहूतिर्बहुभिः कृता ८ विवा
दो व्यवहारस्स्यादुपन्यासस्तुवाङ्मुखम्। उपोद्
घातउदाहार शपनं शपथःपुमान् ९ प्रश्नो
नुयोगःपृच्छाचप्रतिवाक्योत्तरे समे। मिथ्या
भियोगोऽभ्याख्यानमथमिथ्याभिशंसनम्१०

(बड़े वाक्य की रचना का नाम) कथा १ (जिस के अवण से अन्य अर्थ विदि-
त हो और विचारांश से और उस कहानी के नाम) प्रवल्हिका १ प्रहेलि-
का २ (धर्म्मबोधार्थ श्लोकों के बटोर का नाम) स्मृति १ (संग्रह के नाम)
समाहृति १ संग्रहः २॥ ६॥ (जिस में कुछ पूरा किया जावे उस का नाम) स-
मस्या १ (लोक प्रवाद अर्थात् दुर्यश के नाम) किंवदन्ती १ जनश्रुति २
(समाचार के नाम) वार्त्ता १ प्रवृत्ति २ वृत्तान्त ३ उदन्त ४ (नाम के नाम) आ-
ह्वय १॥ ७॥ आख्या २ अभिधान ३ नामधेय ४ नाम ५ (पुकारने के नाम) हू-
ति १ आकारण २ आह्वान ३ (बहुत जनों के पुकारने का नाम) संहूति १॥
॥ ८ ॥ (विवाद के नाम) विवाद १ व्यवहार २ (उपन्यास के नाम) उपन्यास १
वाङ्मुख २ (होनहार योग्य वर्णन के नाम) उपोद्घात १ उदाहार २ (सौगन्द
खाने के नाम) शपन १ शपथ २॥ ९॥ (प्रश्न के नाम) प्रश्न १ अनुयोग २ पृ-
च्छा ३ (उत्तर के नाम) प्रतिवाक्य १ उत्तर २ (झूंठ लगाने के नाम) मिथ्याभियो-
ग १ अभ्याख्यान २ (अदिया दिया न किसी को लगाने के नाम) मिथ्याभिशंसन १॥१०

अभिप्रायः प्रसादस्तु शब्दः स्यादनुरागजः। यशः कीर्तिस्समज्ञा च स्तवस्तोत्रंस्तुतिर्नुतिः ११ आम्रेडितं द्विस्त्रिरुक्तमुच्चैर्घुष्टन्तु घोषणा। काकुः स्त्रियां विकारो यश्शोकभीत्यादिभिर्ध्वनेः १२ अवर्णाक्षेपनिर्व्वाद परीवादापवादवत। उपक्रोशो जुगुप्साच कुत्सा निन्दाच गर्हणे १३ पारुष्यमतिवादस्याद्भर्त्सनन्त्वपकारगीः। यस्सनिन्द उपालम्भस्तत्र स्यात्परिभाषणम् १४ तत्र त्वाक्षारणायस्स्यादाक्रोशो मैथुनम्प्रति। स्यादाभाषणमालापः प्रलापोनर्त्थकम्वचः १५

अभिप्राय २ (अनुरागज शब्द का नाम) प्रसाद १ (कीर्त्ति के नाम) यश १ कीर्त्ति २ समज्ञा ३ (स्तुति के नाम) स्तव १ स्तोत्र २ स्तुति ३ नुति ४ ॥ ११॥ (दो तीन वार कहने का नाम) आम्रेडित १ (जोर से पढ़ने के नाम) उच्चैर्घुष्ट १ घोषणा २ (शोक भय कामादि युक्त वचन का नाम) काकु १ ॥ १२ ॥ (निन्दा के नाम) अवर्ण १ आक्षेप २ निर्व्वाद ३ परीवाद ४ परिवाद ५ अपवाद ६ उपक्रोश ७ जुगुप्सा ८ कुत्सा ९ निन्दा १० गर्हणा ११ ॥ १३ ॥ (निठुर भाषण के नाम) पारुष्य १ अतिवाद २ (चोरी आदि लगाके डरवाने का नाम) भर्त्सन १ (खिझाने का नाम) परिभाषण १॥ १४ ॥ (पर स्त्री से मैथुनार्त्थ वार्त्ता करने के नाम) आक्षारणा १ आक्षारणा २ (सम्बोधन पूर्व्वक वार्त्ता करने के नाम) आभाषण १ आलाप २ (अनर्त्थ वचन का नाम) प्रलाप १ ॥ १५॥

अनुलापो मुहुर्भाषा विलापः परिदेवनम्। वि-
प्रलापो विरोधोक्तिः संलापो भाषणं मिथः॥ १६॥
सुप्रलापः सुवचनमपलापस्तु निह्नवः। सन्देश-
वाग्वाचिकं स्यादुग्भेदास्तु त्रिषूत्तरे॥ १७॥ रुशती
वागकल्याणी स्यात्कल्या तु शुभात्मिका। अ-
त्यर्थमधुरं सान्त्वं सङ्गतं हृदयङ्गमम्॥ १८॥ निष्ठु-
रम्परुषं ग्राम्यमश्लीलं सूनृतम्प्रिये। सत्येथ संकु-
लक्लिष्टे परस्परपराहते॥ १९॥ लुप्तवर्णपदं ग्रस्त-
न्निरस्तन्त्वरितोदितम्। अम्बूकृतं सनिष्ठीवम-
बद्धं स्यादनर्थकम्॥ २०॥

(अभिशोक युक्त भाषण के नाम) अनुलाप १ मुहुर्भाषा २ (रोने के नाम) विलाप १ परिदेवन २ (परस्पर विरुद्ध भाषण के नाम) विप्रला-प १ विरोधोक्ति २ (परस्पर योग्य भाषण का नाम) संलाप १॥ १६॥ (सुन्दर वचन के नाम) सुप्रलाप १ सुवचन २ (छिपे हुये वचन के ना-म) अपलाप १ निह्नव २ (सन्देश के नाम) सन्देशवाक् १ वाचिक २ ॥ १७॥ (अमंगल वाक्य का नाम) रुशती १ (शुभ वचन का नाम) क-ल्या १ (अति मिष्ट वचन का नाम) सान्त्व १ (सम्बद्ध अर्थात् योग्य वचन का नाम) संगत १ हृदयंगम २॥ १८॥ (बड़े बोल के नाम) नि-ष्ठुर १ परुष २ (शिथिल वचन के नाम) ग्राम्य १ अश्लील २ (प्रिय सत्य वचन का नाम) सूनृत १ (पूर्वापर विरुद्ध वचन के नाम) सं-कुल १ क्लिष्ट २॥ १९॥ (आध कहे वचन का नाम) ग्रस्त १ (हल्ल बल्ल वचन का नाम) निरस्त १ (थूक सहित बोलने का नाम) अम्बूकृत १ (अर्थ न्यून वचन का नाम) अबद्ध १॥ २०॥

अनक्षरमवाच्यं स्यादाहतन्तु मृषार्थकम् । अ-
थ म्लिष्टमविस्पष्टं वितथन्त्वनृतं वचः २१ स-
त्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति । शब्दे नि-
नादनिनदध्वनिध्वानरवस्वनाः २२ स्वान
निर्घोषनिर्ह्रादनादनिस्वाननिस्वनाः आर
वारावसंराव विरावा अथ मर्मरः २३ स्वनिते व-
स्त्रपर्णानां भूषणानान्तु शिञ्जितम् । निक्वा
णो निक्वणः क्वाणः क्वणः क्वणनमित्यपि २४
वीणायाः क्वणिते प्रादेः प्रक्वाणप्रक्वणादयः ।
कोलाहलः कलकलस्तिरश्चां वाशितं रुतम् २५

(अकथन योग्य के नाम) अनक्षर १ अवाच्य २ (झुठाई काना-
म) आहत १ (अप्रतीक के नाम) म्लिष्ट १ अविस्पष्ट २ (झूठ का
नाम) अनृत १ ॥ २१ ॥ (सत्य के नाम) सत्य १ तथ्य २ ऋत ३ सम्य-
क् ४ (शब्द के नाम) शब्द १ निनाद २ निनद ३ ध्वनि ४ ध्वान ५
रव ६ स्वन ७ ॥ २२ ॥ स्वान ८ निर्घोष ९ निर्ह्राद १० नाद ११ नि-
स्वान १२ निस्वन १३ आरव १४ आराव १५ संराव १६ विराव १७
(वस्त्र और पत्तों की मर्मराहट का नाम) मर्मर १ ॥ २३ ॥ (गह-
ना की खन खनाहट का नाम) शिंजित १ (वीणादि शब्दों
के नाम) निक्वाण १ निक्वण २ क्वाण ३ क्वण ४ क्वणन ५
॥ २४ ॥ (केवल वीणा के बाजा के नाम) प्रक्वाण १ प्रक्व-
ण २ प्रक्वणन ३ उपक्वणादि ४ (बड़े हल्ला के नाम)
कोलाहल १ कलकल २ (पक्षियों की बोली के नाम)
वाशित १ रुत २ ॥ २५ ॥

स्त्री प्रतिश्रुत्प्रतिध्वाने गीतङ्गानमिमे समे॥ इति शब्दादिवर्गः॥

निषादर्षभगान्धारषड्जमध्यमधैवताः। पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वराः १ काकली तु कले सूक्ष्मे ध्वनौ तु मधुरास्फुटे। कलो मन्द्रस्तु गम्भीरे तारोऽत्युच्चैस्त्रयस्त्रिषु २ समन्वितलयस्त्वेकतालो वीणा तु वल्लकी। विपञ्ची सा तु तन्त्रीभिस्सप्तभिः परिवादिनी ३ ततं वीणादिकं वाद्यमानद्धम्मुरजादिकम्। वंश्यादिकन्तु सुषिरं कांस्यतालादिकं घनम् ४

(प्रति शब्द अर्थात् गूंज के नाम) प्रतिश्रुत १ प्रतिध्वान २ (गाने के नाम) गीत १ गान २॥ इति शब्दादि वर्गः॥

(बाजा वा कण्ठ से गाने का नाम) निषाद १ ऋषभ २ गान्धार ३ षड्ज ४ मध्यम ५ धैवत ६ पञ्चम ७॥१॥ (इनमें इतनी की बोली) निषाद १ गौकी ऋषभ १ छाग की गान्धार १ मयूर की षड्ज १ क्रौंचादि की मध्यम १ घोड़े की धैवत १ कोकिल की पंचम १ (सूक्ष्म शब्द का नाम) काकली १ (मिठबोली बोली का नाम) कल १ (गम्भीर शब्द का नाम) मन्द्र १ (अत्युच्च शब्द का नाम) तार १॥२॥ (वाद्य गानादि के एक संग ताल स्वर का नाम) एकताल १ (वीणा के नाम) वीणा १ विपञ्ची २ वल्लकी ३ (वीणा का लक्षण) ७ तार हों जिस में॥३॥ (वीणादि का नाम) तत १ मुरजादिक अर्थात् मृदंगादि का नाम) आनद्ध १ (वंशादि का नाम) सुषिर १ (झांझ मजीरादि का नाम) घन १॥४॥

चतुर्व्विधमिदम्वाद्यम्वादित्रातोद्यनामकम्।
मृदङ्गामुरजा भेदास्त्वङ्क्यालिंग्योर्ध्वकास्त्र-
यः ५ स्याद्यशः पटहोढक्का भेर्य्यामानकदु-
न्दुभी। आनाकः पटहोस्त्रीस्यात्कोणोवी-
णादिवादनम् ६ वीणादण्डः प्रवालस्स्या-
त्ककुभस्तुप्रसेवकः। कोलम्बकस्तुकायो-
स्या उपनाहोनिबन्धनम् ७

तत १ आनद्ध १ घन १ सुषिर १ इन्हें आतोद्य कहते हैं (मृदं-
ग के नाम) मृदंगा १ मुरजा २ मृदंग के ३ भेद हैं अङ्क्य १ आ-
लिङ्ग्य १ ऊर्ध्वक गोदमें लेकर बजाया जावे सो अंक्य १ जो आ-
लिङ्गन करके बजाया जावे सो आलिङ्ग्य १ (ऊपर को मुख
करके बजाया जावे सो) ऊर्ध्वक १ (इन के लक्षण) (हरीत
की के डौल का) अङ्क्य १ (यव तुल्य मध्य) ऊर्ध्वक १ (गोपु-
च्छ सदृश) आलिंग्य १॥ ५॥ (डङ्कुन के नाम) यशः पटह १
ढक्का २ (नुरुही के नाम) भेरी १ आनक २ दुन्दुभि ३
(नगारा के नाम) आनाक १ पटह २ (जिस से वीणा-
दि बजाते हैं उस का नाम) कोण १॥ ६॥ (वीणा की
डाण्डी का नाम प्रवाल १ (वीणा के नीचे जो खोल २
चर्म्म से मढ़ा हुआ होता है उस के नाम) ककुभ १ प्रसे-
वक २ (वीणा के सर्व्वांग का नाम) कोलम्बक १ (
वीणा में जहां तार बांधे जाते हैं उस के नाम) उपनाह
१ निबन्धन २॥ ७॥ ७॥ ॥ ७ ॥ ७ ॥ ७॥

वाद्यप्रभेदा डमरुमड्डुडिण्डिमझर्झराः। मर्द्दलः पणवोन्येच नर्त्तकीलासिके समे ८ विलम्बितन्द्रुतम्मध्यं तत्त्वमोघोघनंक्रमात्। तालः कालक्रियामानं लयस्साम्यमथास्त्रियाम् ९ ताण्डवंनटनंनाट्यं लास्यन्नृत्यञ्चनर्त्तने। तौर्य्यत्रिकन्नृत्यगीतवाद्यन्नाट्यमिदन्त्रयम् १० भ्रकुंसश्चभ्रुकुंसश्च भ्रूकुंसश्चेतिनर्त्तकः। स्त्रीवेषधारीपुरुषोनाट्योक्तौगणिकाज्जुका ११

(डमरू के नाम) डमरू १ (बड़े डमरू का नाम) मड्डु १ (डिण्डिम का नाम) डिण्डिम १ (झांझड़े का नाम) झर्झर १ (मर्द्दल का नाम) मर्द्दल १ पणव २ (हुडुक का नाम) हुडक १ (नरसिंहा का नाम) गोमुख १ (नाचने वाली के नाम) नर्त्तकी १ लासिका २॥ ८॥ (धीरे २ नाच का नाम) तत्त्व १ (शीघ्र नाच का नाम) ओघ १ (मझोले नाच का नाम) घन १ (समय और क्रिया के प्रमाण का नाम) ताल १ (बाजा और नाच का एक संग ताल छूटना) लय १॥ ९॥ (नाच के नाम) ताण्डव १ नटन २ नाट्य ३ लास्य ४ नृत्य ५ नर्त्तन ६ (नाच गीत बाजा इन तीन के साझे का नाम) तौर्य्यत्रिक १ नाट्य २ ॥ १०॥ (स्त्री वेषधारी पुरुष नचैया अर्थात् सखी के नाम) भ्रकुंस १ भ्रुकुंस २ भ्रूकुंस ३ (केवल नाचने गाने वाली वेश्या के नाम) नाट्याधिकार में गणिका १ अज्जुका २॥ ११॥ ॥

भगिनीपतिरावुत्तो भावो विद्वानथावुकः। जनको युवराजस्तु कुमारो भर्तृदारकः १२ राजा भट्टारको देवस्तत्सुता भर्तृदारिका। देवी कृताभिषेकायामितरासुतु भट्टिनी १३ अब्रह्मण्यमवध्योक्तौ राजश्यालस्तु राष्ट्रियः। अम्बा माताथ बाला स्याद्वासूरार्य्यस्तु मारिषः १४ अत्तिका भगिनी ज्येष्ठा निष्ठा निर्वहणे समे। हण्डे हञ्जे हलाह्वाने नीचां चेटीं सखीं प्रति १५ अङ्गहारोऽङ्गविक्षेपो व्यञ्जकाभिनयौ समौ। निर्वृत्ते त्वङ्गसत्वाभ्यां द्वे त्रिष्वाङ्गिकसात्विके १६

(बहनोई का नाम) आवुत्त१ (विद्वान् का नाम) भाव१ (पिता का नाम) आवुक १ (युवराज के नाम) युवराज१ कुमार २ भर्तृदारक ३॥ १२॥ (राजा के नाम) राजा१ भट्टारक २ देव ३ (राज कन्या का नाम) भर्तृदारिका १ (अभिषेक की हुई स्त्री का नाम) देवी१ (अन्य राज स्त्रियों का नाम) भट्टिनी १॥ १३॥ (ब्राह्मणादि अवध्य का नाम) अब्रह्मण्य१ (राजा के शालेका नाम) राष्ट्रिय १ (माता के नाम) अम्बा१ माता २ (कुमारी के नाम) बाला१ वासू २ (श्रेष्ठ के नाम) आर्य्य१ मारिष २॥ १४॥ (जेठी बहिन का नाम) अत्तिका१ (नाटक की सन्धियों के नाम) निष्ठा१ निर्वहण २ (नीच स्त्री के पुकारने में) हण्डे१ (चारिका के पुकारने में) हञ्जे१ (सखी के पुकारने में) हला१ इतिनाट्याधिकारः यह संज्ञा केवल नाटक ही प्रयोगकी है॥ १५॥ (लचकने के नाम) अंगहार१ अंगविक्षेप २ (भाव बताने के नाम) व्यञ्जक१ अभिनय २ (भौंह आदि मटकाने का नाम) आंगिक१ (अन्तःकरण के भाव का नाम) सात्विक १॥ १६॥

शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः।
वीभत्सरौद्रौ च रसाः शृङ्गारः शुचिरुज्ज्वलः १७
उत्साहवर्द्धनो वीरः कारुण्यं करुणा घृणा। कृ
पा दयानुकम्पा स्यादनुक्रोशोप्यथो हसः १८
हासो हास्यञ्च वीभत्सं विकृतं त्रिष्विदं द्वयम्
विस्मयोद्भुतमाश्चर्य्यं चित्रमप्यथ भैरवम् १९
दारुणं भीषणं भीष्मं भीमं घोरं भयानकम्।
भयङ्करं प्रतिभयं रौद्रन्तूग्रममी त्रिषु २० चतुर्द्द
श दरस्त्रासो भीतिर्भीः साध्वसम्भयम्। विकारो
मानसो भावोनुभावो भाव बोधकः २१

(दश रसों के नाम) शृंगार १ वीर २ करुणा ३ अद्भुत ४ हास्य ५ भयानक ६ वीभत्स ७ रौद्र ८ शान्त ९ वात्सल्य १० (शृंगार के नाम) शृंगार १ शुचि २ उज्ज्वल ३॥ १७॥ (वीररस के नाम) उत्साहवर्द्धन १ वीर २ (करुणारस के नाम) कारुण्य १ करुणा २ घृणा ३ कृपा ४ दया ५ अनुकम्पा ६ अनुक्रोश ७ (हास्य रस के नाम) हस १॥ १८॥ हास २ हास्य ३ (वीभत्स रस के नाम) वीभत्स १ विकृत २ (अद्भुत रस के नाम) अद्भुत १ आश्चर्य्य २ विस्मय ३ चित्र ४ (भयानक रस के नाम) भैरव १॥ १९॥ दारुण २ भीषण ३ भीष्म ४ घोर ५ भीम ६ भयानक ७ भयंकर ८ प्रतिभय ९ (रौद्ररस के नाम) रौद्र १ उग्र २॥ २०॥ (भय के नाम) दर १ त्रास २ भीति ३ भी ४ साध्वस ५ भय ६ (मन के विकार का नाम) भाव १ (भाव प्रकाशक का नाम) अनुभाव १॥ २१॥

गर्व्वोभिमानोहंकारो मानश्चित्तसमुन्नतिः। अ-
नादरःपरिभवःपरीभावस्तिरस्क्रिया २२ रीढ़ा
वमाननावज्ञा अवहेलनमसूर्क्षणम्। मंदाक्षं
ह्रीस्त्रपाव्रीडा लज्जासाऽपत्रपान्यतः २३ क्षान्ति
स्तितिक्षाभिध्यातु परस्य विषये स्पृहा। अक्षांति
रीर्ष्यासूयातुदोषारोपोगुणेष्वपि २४ वैरं विरो
धोविद्वेषोमन्युशोकौतुशुक्स्त्रियाम्। पश्चात्ता
पोनुतापश्च विप्रतीसारइत्यपि २५ कोपक्रोधा
मर्षरोष प्रतिघारुट्क्रुधौस्त्रियाम्। शुचौतुचरि
तेशील मुन्मादश्चित्तविभ्रमः २६

(अहङ्कार के नाम) गर्व्व १ अभिमान २ अहङ्कार ३ (बड़प्पन का ना-
म) मान १ (निरादर के नाम) अनादर १ परिभव २ परीभाव ३ तिरस्क्रि-
या ४ ॥ २२ ॥ रीढ़ा ५ अवमानना ६ अवज्ञा ७ अवहेलन ८ असूर्क्ष-
ण ९ (लज्जा के नाम) मन्दाक्ष १ ह्री २ त्रपा ३ व्रीड़ा ४ लज्जा ५ (दूसरे
से लजाने का नाम) अपत्रपा १ ॥ २३ ॥ (क्षमा के नाम) क्षांति १ तितिक्षा
२ (परधन लेने की इच्छा का नाम) अभिध्या १ (ईर्ष्या का नाम) अक्षां-
न्ति १ ईर्ष्या २ (पै लगाने का नाम) असूया १ ॥ २४ ॥ (वैर के नाम) वैर १
विरोध २ विद्वेष ३ (शोक के नाम) मन्यु १ शोक २ शुक ३ (पछिताने
के नाम) पश्चात्ताप १ अनुताप २ विप्रतीसार ३ ॥ २५ ॥ (क्रोध के
नाम) कोप १ क्रोध २ अमर्ष ३ रोष ४ प्रतिघा ५ रुट् ६ क्रुध ७ क्रुधा
८ रुषा ९ (शुद्धाचरण का नाम) शील १ (सिड़ीपन के नाम) उन्मा-
द १ चित्तविभ्रम २ ॥ २६ ॥

मराडूकपर्णी भराडीरी भराडी योजनवल्ल्यपि । या
सो जवासो दुस्स्पर्शो धन्वयासः कुनाशकः ९१
रोदनी कच्छुरानन्ता समुद्रान्ता दुरालभा । पृश्नि
पर्णी पृथक्पर्णी चित्रपर्णयंघ्रिवल्लिका ९२ क्रो
ष्टुविन्ना सिंहपुच्छी कलशी धावनी गुहा । निदि
ग्धिका स्पृशी व्याघ्री बृहती कराटकारिका ९३
प्रचोदनी कुली क्षुद्रा दुस्स्पर्शा राष्ट्रिकेत्यपि ।
नीली काला क्लीतकिका ग्रामीणा मधुपर्णिका ।
९४ रंजनी श्रीफली तुत्था द्रोणी दोला चनीलि-
नी । अवल्गुजस्सोमराजी सुवल्लिस्सोमवल्लिका ९५

मराडूकपर्णी ७ भराडीरी ८ भरिडरी ९ भराडी १० योजन वल्ली ११ (यवासा के नाम) याम १ यवास २ दुस्स्पर्श ३ धन्वयास ४ धनुर्व्या स ५ कुनाशक ६ ॥ ९१ ॥ रोदनी ७ चोदनी ८ कच्छुरा ९ अनन्ता १० समुद्रान्ता ११ दुरालभा १२ (पिथिवन के नाम) पृश्निपर्णी १ पृथक पर्णी २ चित्रपर्णी ३ अंघ्रिवल्लिका ४ ॥ ९२ ॥ क्रोष्टुविन्ना ५ सिंहपु-च्छी ६ कलशी ७ धावनी ८ गुहा ९ (अटकटैया के नाम) निदिग्धिका १ स्पृशी २ व्याघ्री ३ बृहती ४ कराटकारिका ५ ॥ ९३ ॥ प्रचोदनी ६ कुली ७ क्षुद्रा ८ दुस्स्पर्शा ९ राष्ट्रिका १० (नील के नाम) नीली १ काला २ क्लीतकिका ३ ग्रामीणा ४ मधुपर्णी का ५ ॥ ९४ ॥ रंजनी ६ श्रीफली ७ तुत्था ८ द्रोणी ९ तूणी १० दोला ११ नीलिनी १२ (बकुची के नाम) अवल्गुज १ सोमराजी २ सुवल्लि ३ सोमवल्लिका ४ ॥ ९५ ॥

ऋष्यप्रोक्ता भीरुपत्री नारायण्यश्शतावरी । अहे
रुरथ पीतद्रु कालीयक हरिद्रवः २०१ दार्व्वी पच
म्पचा दारुहरिद्रा पर्ज्जनीत्यपि । वचोग्रगन्धा
षड्ग्रन्था गोलोमी शतपर्व्विका २०२ शुक्ला हैम
वती वैद्यमातृसिंह्यौ तु वाशिका । वृषोऽटरूष-
स्सिंहास्यो वासको वाजिदन्तकः २०३ आस्फो
ता गिरिकर्णी स्याद्विष्णुक्रान्ताऽपराजिता । इक्षु
गन्धा तु काण्डेक्षु कोकिलाक्षेक्षुरक्षुराः २०४
शालेयस्स्याच्छीतशिवश्छत्रा मधुरिका मिसिः ।
मिश्रेयाप्यथसीहुण्डो वज्रस्स्नुक्स्त्री स्नुही गुडा २०५

ऋष्यप्रोक्ता ६ अभीरुपत्री ७ नारायणी ८ शतावरी ९ अहेरु १० (दा रु हल्दी के नाम) पीतद्रु १ कालीयक २ हरिद्रु ३ ॥ २०१ ॥ दार्व्वी ४ पचम्पचा ५ दारुहरिद्रा ६ पर्ज्जनी ७ (वच के नाम) वचा १ उग्रगन्धा २ षड्ग्रंथा ३ गोलोमी ४ शतपर्विका ५ ॥ २०२ ॥ (उजली बच का नाम) हैमवती १ (रूस के नाम) वैद्यमाता १ सिंही २ वासिका ३ वाशिका ४ वृष ५ अटरूष ६ अडरूष ७ सिंहास्य ८ वासक ९ वाजिदन्तक १० ॥ २०३ ॥ (विष्णुक्रान्ता के नाम) आस्फोता १ गिरिकर्णी २ विष्णुकांता ३ अपराजिता ४ (तालमखाने के नाम) इक्षुगन्धा १ काण्डेक्षु २ कोकिलाक्ष ३ इक्षुर ४ क्षुर ५ ॥ २०४ ॥ (सौंफ के नाम) शालेय १ शीतशिव २ छत्रा ३ मधुरिका ४ मिसि ५ मिसी ६ मिशि ७ मिश्री ८ मिश्रेया ९ (सेहुंडा के नाम) सीहुण्ड १ सिहुण्ड २ समीहुण्ड ३ वज्र ४ स्नुक ५ स्नुही ६ स्नुहि ७ स्नुता ८ गुडा ९ गुडी १० ॥ २०५ ॥

समङ्गमुग्धा भौवेल्लममोघा चित्रतण्डुला । तण्डुलश्च कृमिघ्नश्च विडङ्गं पुन्नपुंसकम् १०६ बला वाट्यालका घण्टारवा तु शणपुष्पिका । मृद्वीका गोस्तनी द्राक्षा स्वाद्वी मधुरसेति च १०७ सर्वानुभूतिः सरला त्रिपुटा त्रिवृता त्रिवृत् । त्रिभण्डी रेचनी श्यामा पालिन्द्यो तु सुषेणिका १०८ काला मसूरविदलार्द्धचन्द्रा कालमेषिका । मधुकं क्लीतकं यष्टिमधुकं मधुयष्टिका १०९ विदारी क्षीरशुक्लेक्षुगन्धा क्रोष्ट्री तु या सिता । अन्या क्षीरविदारी स्यान्महाश्वेतर्क्षगन्धिका ११०

समङ्गमुग्धा ११ (वायुभिरंग के नाम) वेल्ल १ अमोघा २ मोघा ३ चित्रतंडुला ४ तण्डुल ५ कृमिघ्न ६ विडंग ७ ॥ १०६ ॥ (बरियारा के नाम) बला १ वाट्यालका २ । सनई के नाम) घण्टारवा १ शणपुष्पिका २ (दाख के नाम) मृद्वीका १ गोस्तनी २ गोस्तना ३ द्राक्षा ४ स्वाद्वी ५ मधुरसा ६ ॥ १०७ ॥ (श्वेत त्रिधारा के नाम) सर्वानुभूति १ सरला २ त्रिपटा ३ त्रिपुटी ४ त्रिवृता ५ त्रिवृत ६ त्रिभण्डी ७ रेचनी ८ (काले त्रिधारा के नाम) श्यामा १ पालिन्दी २ सुषेणिका ३ ॥ १०८ ॥ काला ४ मसूरविदला ५ अर्द्धचन्द्रा ६ कालमेषिका ७ (जेठी मधु के नाम) मधुक १ क्लीतक २ यष्टिमधुक ३ मधुयष्टिका ४ ॥ १०९ ॥ (कृष्ण भूकूष्माण्ड के नाम) विदारी १ क्षीरशुक्ला २ इक्षुगन्धा ३ क्रोष्ट्री ४ (शुक्ल भूकूष्माण्ड के नाम) क्षीरविदारी १ महाश्वेता २ ऋक्षगन्धिका ३ ॥ ११० ॥

लाङ्गली शारदी तोयपिप्पली शकुलादनी। खरा श्वा कारवी दीप्यो मयूरो लोचमस्तकः १११ गोपी श्यामा शारिवा स्यादनन्तोत्पल शारिवा। योग्य मृद्धिस्सिद्धिलक्ष्म्यौ वृद्धेरप्याह्वयाइमे ११२ कदली वारणा बुसा रम्भा मोचांशुमत्फला। काष्ठीला मुद्गपर्णी तु काकमुद्गा सहेत्यपि ११३ वार्त्ताकी हिंगुली सिंही भण्टाकी दुष्प्रधर्षिणी। नाकुली सुरसा रास्ना सुगन्धा गन्धनाकुली ११४ नकुलेष्टा भुजङ्गाक्षी छत्राकी सुवहा च सा। विदारिगन्धांशुमती सालपर्णी स्थिरा ध्रुवा ११५

(जल पीपर के नाम) लांगली १ शारदी २ तोयपिप्पली ३ शकुलादनी ४ (मयूरशिखा वा अजुमोदा के नाम) खराश्वा १ कारवी २ दीप्य ३ मयूर ४ लोचमस्तक ५॥ १११॥ (कारी शाम्ब के नाम) गोपी १ गोपा २ श्यामा ३ शारिवा ४ सारिवा ५ अनन्ता ६ उत्पल शारिवा ७ (वृद्धौषधि के बर्गो के नाम) योग्य १ ऋद्धि २ सिद्धि ३ लक्ष्मी ४॥ ११२॥ (केला के नाम) कदली १ कदला २ कदल ३ वारणा बुसा ४ वारणा बुषा ५ रम्भा ६ मोचा ७ अंशुमत्फला ८ काष्ठीला ९ (बन मूंग के नाम) मुद्गपर्णी १ काकमुद्गा २ सहा ३॥ ११३॥ (बन भांटा के नाम) वार्त्ताकी १ वार्त्ताक २ हिंगुली ३ सिंही ४ भण्टाकी ५ दुमधर्षिणी ६ (रासन के नाम) नाकुली १ सुरसा २ रास्ना ३ सुगन्धा ४ गन्धनाकुली ५॥ ११४॥ नकुलेष्टा ६ भुजंगाक्षी ७ छत्राकी ८ सुवहा ९ (शालपर्णी वा सरिवन के नाम) विदारिगन्धा १ विदारीगन्धा २ अंशुमती ३ शालपर्णी ४ सालपर्णी ५ स्थिरा ६ ध्रुवा ७॥ ११५॥

तुरिडकेरीसमुद्रान्ता कार्प्पासी वदरेति च। भारद्वाजी तुसावन्या शृङ्गी तु ऋषभो वृषः ११६ गाङ्गेरुकी नागबला झषा ह्रस्वगवेधुका। धामार्गवो घोषकस्स्यान्महाजाल्नी सपीतकः ११७ ज्योत्स्नी पटोलिका जाली नादेयी भूमिजम्बुका। स्याल्लाङ्गलिक्यग्निशिखा काकाङ्गी काकनासिका ११८ गोधापदी तु सुवहा मुसली तालमूलिका। अजशृङ्गी विषाणी स्याद्गोजिह्वा दार्व्विके समे ११९ ताम्बूलवल्ली ताम्बूली नागवल्ल्यप्यथ द्विजा। हरेणू रेणुका कौन्ती कपिला भस्मगन्धिनी १२०

(कपास के नाम) तुरडकेरी १ समुद्रान्ता २ कार्प्पासी ३ वदरा ४ (वन की कपास नरमा का नाम) भारद्वाजी १ (काकरा शृंगी के नाम) शृंगी १ ऋषभ २ वृष ३॥ ११६॥ (कँकही के नाम) गांगेरुकी १ नागबला २ झषा ३ ह्रस्वगवेधुका ४ (श्वेत तुरई के नाम) धामार्गव १ घोषक २ (पीले फूल की तुरई के नाम) महाजाली १॥ ११७॥ (चिँचिंडा के नाम) ज्योत्स्नी १ ज्योत्स्ना २ पटोलिका ३ जाली ४ (भूमि जामुनि के नाम) नादेयी १ भूमिजम्बुका २ (काकजंघा अर्त्थात् कौवा ढोढ़ी के नाम) काकांगी १ काकनासिका २॥ ११८॥ (करियारी के नाम) लांगलिकी १ अग्निशिखा २ (हंसपदी के नाम) गोधापदी १ सुवहा २ (मुसरि के नाम) मुसली १ तालमूलिका २ (मेंढ़ा शृंगी के नाम) अजशृंगी १ विषाणी २ (गोभी के नाम) गोजिह्वा १ दार्व्विका २ दार्व्विका ३॥ ११९॥ (नागबेलि के नाम) ताम्बूलवल्ली १ नागवल्ली २ (गाँगनधूरि के नाम) द्विजा १ हरेणु २ रेणुका ३ कौन्ती ४ कपिला ५ भस्मगन्धिनी ६॥ १२०॥

मल्लवालुकमैलेयं सुगन्धि हरिवालुकम्। वालु-
क ञ्चाथपालंकया म्मुकुन्दः कुन्द कुन्दुरू १२१
वालं ह्रीवेर वर्हिष्ठो दीच्यङ्के शाम्बुनामच। का-
लानुसार्य्यं वृद्धा श्मपुष्य शीत शिवानितु १२२
शैलेयं तालपर्णीतु दैत्या गन्धकुटी मुरा। गन्धि-
नी गजभक्ष्यातु सुवहा सुरभीरसा १२३ महेर-
णा कुन्दुरुकी सल्लकी ह्लादिनीतिच। अग्नि-
ज्वाला सुभिक्षेतु धातकी धातुपुष्पिका १२४
पृथ्वीका चन्द्रवाले ला निष्कुटि र्बहुलाथसा।
सूक्ष्मोपकुञ्चिका तुत्था कोरङ्गी त्रिपुटा त्रुटिः १२५

(मूस घर के नाम) मलवालुक १ ऐलेय २ सुगन्धि ३ हरिवालुक ४ वालु-
क ५ (पल्ला की के नाम) पालङ्की १ मुकुन्द २ कुन्द ३ कन्दुरू ४॥ १२१॥
(नेत्रबाला के नाम) वाल १ ह्रीवेर २ वर्हिष्ठ ३ उदीच्य ४ केश ५ अम्बु
६ (शिलाजित पथर चटा के नाम) वृद्ध १ अश्मपुष्प २ शीतशिव ३
॥ १२२॥ शैलेय ४ कालानुसार्य्य ५ (मुरठी वा तालिस पत्र के नाम)
तालपर्णी १ दैत्या २ गन्धकुटी ३ मुरा ४ गन्धिनी ५ (साल के नाम)
गजभक्ष्या १ गजभक्षा २ सुवहा ३ सुरभी ४ सुरभि ५ रसा ६॥ १२३॥
महेरणा ७ महेरुणा ८ कुन्दुरुकी ९ सल्लकी १० ह्लादिनी ११ ह्ला-
दिनी १२ (धवई के नाम) अग्निज्वाला १ सुभिक्षा २ धातकी ३ धातु
पुष्पिका ४ ॥ १२४ ॥ (इलायची के नाम) पृथ्वीका १ चन्द्रवाला
२ एला ३ निष्कुटि ४ निष्कुटी ५ बहुला ६ (गुजराती इलायची के नाम)
उपकुञ्चिका १ तुत्था २ कोरंगी ३ त्रिपुटा ४ त्रुटि ५ त्रुटी ६ ॥ १२५॥

व्याधिः कुष्ठमस्त्रारिभाव्यम्वाप्यम्स्यापाकलमुत्पलम शङ्खिनी चोरपुष्पी स्यात्केशिन्यथवितुन्नकः
१२६ झटामला झटानाली शिवातामलकीतिच।
प्रपौराडरीकम्पौराडर्य्यमथतुन्नः कुबेरकः १२७
कुणिः कच्छः कान्तलकोनन्दिवृक्षोथराक्षसी।
चराडा धनहरी क्षेमदुष्पत्रगराहासकाः १२८
व्याड़ायुधम्व्याघ्रनखङ्करजञ्चक्रकारकम्।
सुषिराविद्रुमलताकपोतांघ्रिर्नटीनली १२९ ध
मन्यंजनकेशीचहनुर्हट्टविलासिनी। शुक्ति
शङ्खः खुरः कोलदलन्नखमथाढकी १३०

कूट के नाम) व्याधि १ कुष्ठ २ पारिभाव्य ३ वाप्य ४ व्याप्य ५ आप्य ६ पाकल ७ उत्पल ८ (शङ्ख कोडिल्ला हुल्ला के नाम) शङ्खिनी १ चोरपुष्पी २ केशिनी ३ (भूम्या मल की अर्थात् आँवरी के नाम) वितुन्नक १ ॥ १२६ ॥ झटामला २ झटा ३ तानी ४ शिवा ५ तामलकी ६ (गुलाब के नाम) प्रपौराडरीक १ पौराडर्य्य २ (तुनि के नाम) तुन्न १ कुबेरक २ ॥ १२७ ॥ कुणि ३ नुणि ४ कच्छ ५ कान्तलक ६ नन्दिवृक्ष ७ नन्दीवृक्ष ८ (धनहरी के नाम) राक्षसी १ चराडा २ धनहरी ३ क्षेम ४ दुष्पत्र ५ गराहासक ६ ॥ १२८ ॥ (नखनाख्य गन्धद्रव्य के नाम) व्याड़ायुध १ व्यालायुध २ व्याघ्रनख ३ करज ४ चक्रकारक ५ (पवारी के नाम) सुषिरा १ विद्रुमलता २ कपोतांघ्रि ३ नटी ४ नली ५ ॥ १२९ ॥ धमनी ६ अंजनकेशी ७ (ककूदनि के नाम) हनु १ हट्टविलासिनी २ शुक्ति ३ शंख ४ खुर ५ कोलदल ६ नख ७ नखी ८ (अरहरी के नाम) आढकी १ ॥ १३० ॥

कासी मृत्स्ना तु वरिका मृत्तालक सुराष्ट्रजे। कुट
न्नटं दासपुरं वानेयं परिपेलवम् १३१ प्लवगो
पुरगोनर्द्दकैवर्त्तीमुस्तकानि च। ग्रन्थिपर्णं शुक
म्बर्हं पुष्पं स्थौणेयकुक्कुरे १३२ मरुन्माला तु
पिशुना स्पृक्का देवी लता लघुः। समुद्रान्ता वधूः
कोटिवर्षा लङ्कोपिकेत्यपि १३३ तपस्विनी ज-
टामांसी जटिला लोमशा मिसी। त्वक्पत्रमुत्क-
टम्भृङ्गन्त्वचम्चोचम्वराङ्गकम् १३४ कर्पूर
कोद्राविडकः काल्पको वेधमुख्यकः। ओष-
ध्यो जातिमात्रे स्युरजातौ सर्वमौषधम् १३५

कासी २ मृत्स्ना ३ तुवरिका ४ तवरिका ५ मृत्तालक ६ सुराष्ट्रज ७ (मोथा के नाम) कुटन्नट १ दासपुर २ वानेय ३ परिपेलव ४॥१३१॥ प्लव ५ गोपुर ६ गोनर्द्द ७ कैवर्त्ती ८ मुस्तक ९ (कुकुरौंधा के नाम) ग्रन्थिपर्ण १ शुक २ वर्हपुष्प ३ शुकवर्ह ४ वर्हिपुष्प ५ वर्हिष्पुष्प ६ वर्ह ७ पुष्प ८ स्थौणेय ९ कुक्कुर १०॥ १३२॥ (स्पक्क के नाम) मरुन्माला १ पिशुना २ स्पृक्का ३ देवी ४ लता ५ लघु ६ समुद्रान्ता ७ वधू ८ कोटिवर्षा ९ लङ्कोपिका १०॥ १३३॥ (जटामासी के नाम) तपस्विनी १ जटामांसी २ जटिला ३ लोमशा ४ मिसी ५ मिसि ६ (तज के नाम) त्वक्पत्र १ उत्कट २ भृंग ३ त्वच ४ चोच ५ वरांगक ६॥ १३४॥ (कपूर के नाम) कर्पूरक १ द्राविडक २ काल्पक ३ वेधमुख्यक ४ (तृणवृक्षों का नाम) ओषधि १ (तूलाज मात्र का नाम) औषध १॥ १३५॥

शाकाख्यं पत्रपुष्पादि तण्डुलीयोऽल्पमारिषः।
विशल्याग्निशिखानन्ता फलिनी शक्रपुष्पिका।
२३६ स्याद्रक्षगन्धाछगलान्त्र्यावेगी वृद्धदारकः
भुङ्गो ब्राह्मी तु मत्स्याक्षी वयस्था सोमवल्लरी २३७
पटुपर्णी हैमवती स्वर्णक्षीरी हिमावती। हयपु-
च्छी तु काम्बोजी माषपर्णी महासहा २३८ तु-
ण्डिकेरी रक्तफला बिम्बिकापीलुपर्ण्यपि। बर्ब-
रा कबरी तुङ्गी खरपुष्पाजगन्धिका २३९ एलाप-
र्णी तु सुवहा रास्ना युक्तरसा च सा। चाङ्गेरी चुक्रि-
का दन्तशठाम्बष्ठाम्ललोणिका २४०

(तरकारी मात्र का नाम) शाक १ (चौराई के नाम) तण्डुलीय १ अल्पमारिष २ (इन्द्र पुष्पी के नाम) विशल्या १ अग्निशिखा २ अनन्ता ३ फलिनी ४ शक्रपुष्पिका ५॥ २३६॥ (विधारे के नाम) वृक्षगन्धा १ ऋष्यगन्धा २ छगलांत्री ३ आवेगी ४ वृद्धदारक ५ जुङ्ग ६ (ब्रह्मी बूटी के नाम) ब्राह्मी १ मत्स्याक्षी २ वयस्था ३ सोमवल्लरी ४॥ २३७॥ (मकोई के नाम) पटुपर्णी १ हैमवती २ स्वर्णक्षीरी ३ हिमावती ४ (मूंग के नाम) हयपुच्छी १ काम्बोजी २ माषपर्णी ३ महासहा ४॥ २३८॥ (कुँदुरू के नाम) तुण्डिकेरी १ रक्तफला २ बिम्बिका ३ पीलुपर्णी ४ (बबई के नाम) बर्बरा १ कबरी २ तुंगी ३ खरपुष्पा ४ अजगन्धिका ५॥ २३९॥ (कोलिन्दरा के नाम) एलापर्णी १ सुवहा २ रास्ना ३ युक्तरसा ४ (अम्लोना वा चूक के नाम) चांगेरी १ चुक्रिका २ दन्तशठा ३ अम्बष्ठा ४ अम्ललोणिका ५॥ २४०॥

सहस्रवेधी चुक्रोऽम्लवेतस शतवेध्यपि। नम-
स्कारी गराडकारी समङ्गा खदिरेत्यपि १४१ जीवन्ती
जीवनी जीवा जीवनीया मधुस्रवा। कूर्च्चशीर्षो मधु
रकश्शृङ्ग ह्रस्वाङ्ग जीवकाः १४२ किराततिक्तो
भूनिम्बोऽनार्य्यतिक्तोऽथसप्तला। विमला सात
ला भूरिफेना चर्म्मकषेत्यपि १४३ वायसोली
स्वादुरसा वयस्थाथ मकूलकः। निकुम्भो दन्ति
का प्रत्यक्श्रेण्युदुम्बरपर्ण्यपि १४४ अजमोदा
तूग्रगन्धा ब्रह्मदर्भा यवानिका। मूलपुष्कर
काश्मीरपद्मपत्राणि पौष्करे १४५

(अँबिलबेत के नाम) सहस्रवेधी १ चुक्र २ अम्लवेतस ३ शतवेधी ४ (कि-
सी २ के मत से चांगेरी आदि ५ भी अँबिलबेत के लजालू के नाम) नमस्का-
री १ गराडकारी २ समंगा ३ खदिरी ४ ॥ १४१ ॥ (जिसे गुर्ज्जर देश में डोडी
कहते हैं उस औषधि के नाम) जीवन्ती १ जीवनी २ जीवा ३ जीवनीया ४ म-
धुस्रवा ५ (जीवक के नाम) कूर्च्चशीर्ष १ मधुरक २ शृंग ३ ह्रस्वांग ४ जी-
वक ५ ॥ १४२ ॥ (चिरायता के नाम) किराततिक्त १ भूनिम्ब २ अना-
र्य्यतिक्त ३ (सीकुराडु भेद के नाम) सप्तला १ विमला २ शातला ३ सात-
ला ४ भूरिफेना ५ चर्म्मकषा ६ ॥ १४३ ॥ (काकोलि के नाम) वाय-
सोली १ स्वादुरसा २ वयस्था ३ (दँतिया के नाम जिस के बीज को
जयपाल कहते हैं) मकूलक १ निकुम्भ २ दन्तिका ३ प्रत्यक्श्रेणी
४ उदुम्बरपर्णी ५ ॥ १४४ ॥ (यवायानि के नाम) अजमोदा १ उग्रगन्धा २ ब्र-
ह्मदर्भा ३ यवानिका ४ (पुष्कर मूल के नाम) पुष्कर १ काश्मीर २ पद्मपत्र ३ ॥ १४५

अव्यथातिचरापद्माचारटीपद्मचारिणी। का-
म्पिल्यःकर्कशश्चन्द्रोरक्ताङ्गोरोचनीत्यपि॥१४६
प्रपुन्नाडस्त्वेडगजोदद्रुघ्नश्चक्रमर्द्दकः।पद्मा
टउरणाख्यश्चपलाण्डुस्तुमुकन्दकः१४७ल
तार्कदुद्रुमौतत्रहरितेऽथमहौषधम्।लशुनं
गृञ्जनारिष्टमहाकन्दरसोनकाः१४८ पुनर्न्न
वातुशोथघ्नीवितुन्नंसुनिषण्णकम्।स्याद्वा
तकःशीतलोपराजितशणपर्ण्यपि१४९
पारावताङ्घ्रिःकटभीपण्याज्योतिष्मतीलता।
वार्षिकन्त्रायमाणास्यात्त्रायन्तीवलभद्रिका१५०

(कपिला के नाम) अव्यथा१ अतिचरा२ पद्मा३ चारटी४ पद्मचा-
रिणी५ (कबीला के नाम) काम्पिल्य१ कर्कश२ चन्द्र३ रक्तांग
४ रोचनी५ रेचनी६॥१४६॥ (चकवड वा पवार के नाम) प्रपुन्नाड
१ एडगज२ दद्रुघ्न३ चक्रमर्द्दक४ पद्माट५ उरणाख्य६ (प्याज
के नाम) पलाण्डु१ मुकन्दक२॥१४७॥ लतार्क३ दुद्रुम४ (ल-
हसुन के नाम) महौषध१ लशुन२ गृञ्जन३ अरिष्ट४ महाक-
न्द५ रसोनक६॥१४८॥ (गदहपुन्ना के नाम) पुनर्न्नवा१ शो-
थघ्नी२ (विसखपरिया के नाम) वितुन्न१ सुनिषण्णक२ (पटुवा
वा पटशाखा के नाम) वातक१ शीतल२ अपराजिता३ शणप-
र्णी४॥१४९॥ (माल्ककांगनी के नाम) पारावताङ्घ्रि१ कटभी२
पण्या३ ज्योतिष्मती४ लता५ (चिरायता के फल के नाम) वार्षि
क१ त्रायमाणा२ त्रायन्ती३ वलभद्रिका४॥१५०॥

विष्वक्सेनप्रिया गृष्टिर्वाराही बदरेत्यपि। मा-
र्कवो भृङ्गराजस्स्यात्काकमाची तु वायसी १५१
शतपुष्पा सितच्छत्राऽतिच्छत्रा मधुरा मिसिः। अ-
वाक्पुष्पी कारवी च सरणा तु प्रसारिणी १५२
तस्यां कटम्भरा राजबला भद्रबलेत्यपि। जनी
जतूका रजनी जतुकृच्चक्रवर्त्तिनी १५३ संस्प-
र्शाथ शटी गन्धमूली षड्ग्रन्थिकेत्यपि। कर्चूरो
ऽपि पलाशोऽथ कारवेल्लः कटिल्लकः १५४ सु-
षवी चाथ कुलकम्पटोलस्तिक्तकः पटुः। कूष्मा-
ण्डकस्तु कर्कारुरुर्व्वारुः कर्कटी स्त्रियौ १५५

(वाराही कन्द के नाम) विष्वक्सेनप्रिया १ गृष्टि २ वाराही ३ बदरा ४ (भँगिरा के नाम) मार्कव १ भृंगराज २ (कौंवैया वा कौवाहाड़ी गोड़ी के नाम) काकमाची १ वायसी २॥ १५१॥ (सौंफ के नाम) शतपुष्पा १ सितच्छत्रा २ अतिच्छत्रा ३ मधुरा ४ मिसि ५ अवाक्पुष्पी ६ कारवी ७ (कुब्ज प्रसारिणी वा चाँद वेल वा पसारनि के नाम) सरणा १ प्रसारिणी २॥ १५२॥ कटम्भरा ३ राजबला ४ भद्रबला ५ (चक्वत के नाम) जनी १ जतूका २ रजनी ३ जतुकृत् ४ चक्रवर्त्तिनी ५॥ १५३॥ संस्पर्शा ६ (कचूर के नाम) शटी १ गन्धमूली २ षड्ग्रन्थिका ३ कर्चूर ४ पलाश ५ (करैला के नाम) कारवेल्ल १ कटिल्लक २॥ १५४॥ सुषवी ३ (परवर के नाम) कुलक १ पटोल २ तिक्तक ३ पटु ४ (कुम्हड़ा के नाम) कूष्माण्डक १ कर्कारु २ (ककरी के नाम) उर्व्वारु १ कर्कटी २॥ १५५॥

इक्ष्वाकुः कटुतुम्बी स्यात्तुम्ब्यलाबूरुभे समे।
चित्रागवाक्षीगोदुग्धा विशाला त्विन्द्रवारुणी
१५६ अर्शोघ्नस्सूरणः कन्दो गण्डीरस्तु समष्ठिला
कलम्ब्युपोदिका स्त्री तु मूलकं हिलमोचिका १५७
वास्तुकं शाकभेदास्स्युर्दूर्वा तु शतपर्विका। सह-
स्रवीर्य्या भार्गव्यौ रुहानन्ताथसासिता १५८ गो-
लोमी शतवीर्य्या च गण्डाली शकुलाक्षकः। कुरु-
विन्दो मेघनामा मुस्ता मुस्तकमस्त्रियाम् १५९
स्याद्भद्रमुस्तको गुन्द्रा चूडाला चक्रलोच्चटा। वं-
शे त्वक्सारकर्मारत्वचिसारतृणध्वजाः १६०

(करुई लौकी के नाम) इक्ष्वाकु १ कटुतुम्बी २ (लौकी के नाम) तुम्बी १ अलाबू २ (जंगली ककरी के नाम) चित्रा १ गवाक्षी २ गो-दुग्धा ३ गोडुम्बा ४ (इंद्रायण के नाम) विशाला १ इन्द्रवारु-णी २॥ १५६॥ (सूरण वा कांद के नाम) अर्शोघ्न १ सूरण २ सू-रण ३ कन्द ४ (गंडरी के नाम) गण्डीर १ समष्ठिला २ (करेमुवा का नाम) कलम्बी १ (पोई का नाम) उपोदिका १ (मूरी का नाम) मूलक १ (हिलसा का नाम) हिलमोचिका २॥ १५७॥ (बथुई का नाम) वास्तुका १ (दूब के नाम) दूर्वा १ शतपर्विका २ सहस्रवीर्य्या ३ भार्गवी ४ रुहा ५ अनंता ६ (उजली दूब के नाम)॥ १५८॥ गोलोमी १ शत-वीर्य्या २ गण्डाली ३ शकुलाक्षक ४ (मोथा के नाम) कुरुविन्द १ मेघ नामा २ मुस्ता ३ मुस्तक ४॥ १५९॥ (नागर मोथा के नाम) भद्रमुस्तक १ भद्रा २ गुन्द्रा ३ ये भी मोथा विशेष के नाम हैं चूडाला १ चक्रला २ उच्चटा ३ (बांस के नाम) वंश १ त्वक्सार २ कर्मार ३ त्वचिसार ४ तृणध्वज ५॥ १६०॥

शतपर्व्वा यवफलो वेणुमस्करतेजनाः। वेण-
वः कीचकास्ते स्युर्ये स्वनन्त्यनिलोद्धताः २६१
ग्रन्थिर्ना पर्व्व परुषी गुन्द्रस्तेजनकः शरः। नड-
स्तु धमनः पोटगलोऽथो काशमस्त्रियाम् २६२ इ-
क्षुगन्धा पोटगलः पुंसि भूम्नि तु बल्वजाः। रसाल
इक्षुस्तद्भेदाः पुण्ड्रकान्तारकादयः २६३ स्याद्वी-
रणं वीरतरं मूलेऽस्योशीरमस्त्रियाम्। अभयन्न-
लदं सेव्यममृणालं जलाशयम् २६४ लाम-
ज्जकं लघुलयमवदाहेष्टकापथे। नडादयस्तृ-
णं गर्मुच्छ्यामाकप्रमुखा अपि २६५

शतपर्व्वा ६ यवफल ७ वेणु ८ मस्कर ९ तेजन १० (जो छेद में वायु
जाने से शब्द करने लगे उन बाँसों का नाम) कीचक १॥ २६१॥
(गांठि वा पोढ़ के नाम) ग्रन्थि १ पर्व २ परुष ३ (रामशर वा सरह-
री के नाम) गुन्द्र १ तेजनक २ शर ३ (नरकुल के नाम) नड १ धमन
२ पोटगल ३ (काश के नाम) काश १॥ २६२॥ इक्षुगन्धा २ पोट-
गल ३ (बगई का नाम) बल्वज १ (ऊंख के नाम) रसाल १ इक्षु २
(पौंडा ऊंख का नाम) पुण्ड्र १ (केतारा ऊंख के नाम) कान्तार १॥
२६३॥ (गांडर के नाम) वीरण १ वीरतर २ (गांडरे की जड़ के ना-
म) उशीर १ अभय २ नलद ३ सेव्य ४ अमृणाल ५ जलाशय
६॥ २६४॥ लामज्जक ७ लघुलय ८ अवदाह ९ इष्टकापथ १०
(नडादि गर्मुच्छ श्यामाकादि का नाम) तृण १॥ २६५॥

अस्त्री कुशं कुथो दर्भः पवित्रमथ कत्तृणम् ।
पौरसौगन्धिकध्यामदेवजग्धकरौहिषम् १६६
छत्रातिछत्रपालघ्नौ मालातृणकभूस्तृणे । शा-
ष्पं बालतृणं घासो यवसं तृणमर्ज्जुनम् १६७
तृणानां संहतिस्तृण्या नड्या तु नडसंहतिः । तृ-
णराजाह्वयस्तालो नालिकेरस्तु लाङ्गली १६८
घोराटा तु पूगः क्रमुको गुवाकः खपुरोस्य तु ।
फलमुद्वेगमेते च हिंतालसहितास्त्रयः १६९
खर्ज्जूरः केतकी ताली खर्ज्जूरी च तृणद्रुमाः ॥
इति वनौषधिवर्गः ॥

(कुश के नाम) कुश १ कुथ २ दर्भ ३ पवित्र ४ (रौहिष के नाम) क-
त्तृण १ पौर २ सौगन्धिक ३ ध्याम ४ देवजग्धक ५ रौहिष ६ ॥ १६६ ॥
(पानी के खर के नाम) छत्रा १ अतिछत्र २ पालघ्न ३ मालातृणक
४ भूस्तृण ५ (नये खर के नाम) शाष्प १ बालतृण २ (घास के ना-
म) घास १ यवस २ (खरमात्र के नाम) तृण १ अर्ज्जुन २ ॥ १६७ ॥
(खरही का नाम) तृण्या १ (नरई आदि के बटोर का नाम)
नड्या १ (तार के नाम) तृणराज १ ताल २ (नारियल के नाम) नालि-
केर १ लांगली २ ॥ १६८ ॥ (सुपारी के नाम) घोराटा १ पूग २
क्रमुक ३ गुवाक ४ खपुर ५ (सुपारी के फल का नाम) उद्वे-
ग १ (खजूरि के नाम) खर्ज्जूर १ केतकी २ ताली ३ खर्ज्जूरी ४
ये ८ का तृणद्रुम नाम है ॥ १६९ ॥ इति वनौषधिवर्गः

सिंहो मृगेन्द्रः पञ्चास्यो हर्य्यक्षः केशरी हरिः। कण्ठीरवो मृगरिपुर्मृगदृष्टिर्मृगाशनः॥ पुण्डरीकः पञ्चनखश्चित्रकायमृगद्विषः। शार्दूलद्वीपिनौ व्याघ्रे तरक्षुस्तु मृगादनः १ वराहः शूकरो घृष्टिः कोलः पोत्री किरिः किटिः। दंष्ट्री घोणी स्तब्धरोमा क्रोडो भूदार इत्यपि २ कपिप्लवङ्गप्लवगशाखामृगवलीमुखाः। मर्कटो वानरः कीशो वनौकाश्च भल्लुके ३ ऋक्षाच्छभल्लभल्लूका गण्डके खड्गखड्गिनौ। लुलायमहिषो वाहद्विषत्कासरसैरिभाः ४

(सिंह के नाम) सिंह १ मृगेन्द्र २ पञ्चास्य ३ हर्य्यक्ष ४ केसरी ५ केशरी ६ हरि ७ कण्ठीरव ८ मृगरिपु ९ मृगदृष्टि १० मृगाशन ११ (बाघ के नाम) शार्दूल १ द्वीपी २ व्याघ्र ३ (तेंदुवा के नाम) तरक्षु १ मृगादन २॥ १॥ (सुवर के नाम) वराह १ शूकर २ घृष्टि ३ गृष्टि ४ कोल ५ पोत्री ६ किरि ७ किटि ८ दंष्ट्री ९ घोणी १० स्तब्धरोमा ११ क्रोड १२ भूदारक १३॥ २॥ (वानर के नाम) कपि १ प्लवंग २ प्लवग ३ शाखामृग ४ वलीमुख ५ मर्कट ६ वानर ७ कीश ८ वनौकाः ९ (रीछ के नाम) भल्लुक १ ॥ ३॥ ऋक्ष २ अच्छभल्ल ३ भल्लूक ४ (गैंडा के नाम) गण्डक १ खड्ग २ खड्गी ३ (भैंसा के नाम) लुलाय १ महिष २ वाहद्विषत ३ कासर ४ सैरिभ ५॥ ४॥

स्त्रियां शिवा भूरिमायो गोमायु मृगधूर्त्तकाः । शृ
गालवञ्चककोष्टु फेरुफेरवजम्बुकाः ५ ओतु
र्विड़ालो मार्ज्जारो वृषदंशक आखुभुक । त्रयो गो
धेरगोधार गौधेया गोधिकात्मजे ६ श्वावित्तु
शल्यस्तल्लोम्नि शल्ली शललं शलम् ।
वातप्रमीर्व्वातमृगः कोकस्त्वीहामृगो वृकः
७ मृगेकुरङ्गवातायु हरिणा जिनयोनयः ।
ऐणेयमेणयाश्चर्मा द्यमेणास्यैणमुभेत्रिषु ८
कदली कन्दली चीनश्चमूरु प्रियकावपि । समू
रुश्चेति हरिणा अमी अजिनयोनयः ९

(सियार के नाम) शिवा १ भूरिमाय २ गोमायु ३ मृगधूर्त्तक ४ शृ
गाल ५ वञ्चक ६ बंचक ७ क्रोष्टा ८ फेरु ९ फेरव १० जम्बुक ११
॥ ५॥ (बिलार के नाम) ओतु १ विड़ाल २ मार्ज्जार ३ वृषदंश-
क ४ आखुभुक ५ (चन्दन गोह के नाम) गोधेर १ गोधार २ गो-
धेय ३॥ ६॥ (साही के नाम) श्वावित १ शल्य २ (साही के रो-
वों के नाम) शल्ली १ शलल २ शल ३ (वातप्रमी के नाम)
वातप्रमी १ वातमृग २ (भ्यड़हा वा बिग के नाम) कोक १ ई-
हामृग २ वृक ३॥ ७॥ (हरिण के नाम) मृग १ कुरंग २ वा-
तायु ३ हरिण ४ अजिनयोनि ५ (हरणी के चर्म्म मांसादि का
नाम) ऐणेय १ (और हरणा के चर्म्मादि का नाम) ऐण १
॥ ८॥ (मृग भेदों के नाम) कदली १ कन्दली २ चीन ३ चमूरु
४ प्रियक ५ समूरु ६ हरिण ७॥ ९॥

कृष्णसाररुरुन्यंकुरंकुशम्बररौहिषाः।गोक
र्णपृषतैणर्श्यरोहिताश्चमरोमृगाः २० गन्ध
र्व्वशरभरामसृमरागवयशशाः। इत्या
दयोमृगेन्द्राद्या गवाद्याःपशुजातयः २१अ
धोगन्तातुखनकोवृकःपुन्ध्वजउन्दुरः। उन्दु
रुर्मूषिकोप्याखुर्गिरिकाबालमूषिका।
सरटःकृकलासस्स्यान्मुसलीगृहगोधिका २२

(काले हरिण का नाम) कृष्णसार १ (भुवार का नाम) रुरु १ (नागुण का नाम) न्यंकु १ (चीता का नाम) रंकु १ (सावर का नाम) शम्बर १ (रोही का नाम) रौहिष १ (गोव का नाम) गोकर्ण १ (पृषित का नाम) पृषत १ (सुन्दर नेत्र वाले हरिण का नाम) एण १ (जल्द च लने वाले का नाम) ऋष्य १ (लाले हरिण का नाम) रोहित १ (सुरह गाय का नाम) चमरी १ ॥२०॥ (मृग भेदों के नाम) गन्धर्व १ शरभ २ राम ३ सृमर ४ गवय ५ शश ६ (इनमें मद कुचे मृग का नाम) गन्धर्व १ शरभ २ लड़ी सरा ३ (अति रमणीय का नाम) राम १ (दोड़िया का नाम) सृमर १ (लीलगाह का नाम) गवय १ (चौग ड़ा का नाम) शश १ (सिंह हरिण गो महिषादि सब चौपायों का नाम) पशुजाति १ ॥२१॥ (मूस के नाम) अधोगन्ता १ ख नक २ वृक ३ पुन्ध्वज ४ उन्दुर ५ उन्दुरु ६ मूषिक ७ आखु ८ (छोटी मुसरी के नाम) गिरिका १ बालमूषिका २ (गिरगिरान के नाम) सरट १ कृकलास २ (छपकी वा विस्तुइया के नाम) मुसली १ गृहगोधिका २॥ २२॥

लूता स्त्री तन्तुवायोर्णा नाम मर्कटकाः समाः।
नीलङ्गुस्तु क्रमिः कर्णजलौका शतपद्युभे
२३ वृश्चिकः शूककीटः स्यादलिद्रोणौ तु वृ-
श्चिके। पारावतः कलरवः कपोतोऽथ शशा-
दनः २४ पत्री श्येन उलूके तु वायसारातिपेच-
कौ। दिवान्धः कौशिको घूको दिवाभीतो नि-
शाटनः। व्याघ्राटः स्याद्भरद्वाजः खञ्जरीटस्तु
खञ्जनः २५ लोहपृष्ठस्तु कङ्कः स्यादथ चाषः
किकीदिविः। कलिङ्गभृङ्गधूम्याटा अथ स्या-
च्छतपत्रकः २६

(मकरी के नाम) लूता १ तन्तुवाय २ ऊर्णानाभ ३ मर्कटक ४ (सो-
न किरवा के नाम) नीलंगु १ क्रमि २ (खनखजूर वा गोजर के ना-
म) कर्णजलौका १ शतपदी २ ॥ २३ ॥ (डांडा के नाम) वृश्चि-
क १ शूककीट २ (बीछी के नाम) आलि १ द्रोण २ वृश्चिक ३ (क-
बूतर के नाम) पारावत १ कलरव २ कपोत ३ (बाज के नाम) श-
शादन १ ॥ २४ ॥ पत्री २ श्येन ३ (खूसट घुघुवा वा उल्लू के ना-
म) उलूक १ वायसाराति २ पेचक ३ दिवान्ध ४ कौशिक ५ घूक ६
दिवाभीत ७ निशाटन ८ (भर्दूल के नाम) व्याघ्राट १ भरद्वाज २
(खड़ैरेचा के नाम) खञ्जरीट १ खञ्जन २ ॥ २५ ॥ (उजली चील्ह
के नाम) लोहपृष्ठ १ कङ्क २ (नील कराठ वा लीला गराला के ना-
म) चाष १ किकीदिवि २ (भुजा कैल वा भुजेरा के नाम) कलिं-
ग १ भृंग २ धूम्याट ३ (कठफोरवा के नाम) शतपत्रक १ ॥ २६ ॥

दार्व्वाघाटोऽथसारङ्गस्तोककश्चातकस्समाः।
कृकवाकुस्ताम्रचूडः कुक्कुटश्चरणायुधः १७
चटकः कलविङ्कस्स्यात्तस्यस्त्रीचटकातयोः।
पुमपत्येचाटकैरस्स्यपत्येचटकैवसा १८॥
कर्क्करेटुः करेटुस्स्यात्कृकणक्रकरौसमौ। व
नप्रियःपरभृतःकोकिलःपिकइत्यपि १९ का
केतुकरटारिष्टबलिपुष्टसकृत्प्रजाः। ध्वांक्षा
त्मघोषपरभृद्बलिभुग्वायसाअपि २० समव
चचिरंजीवीचैकदृष्टिश्चमौकुलिः। द्रोणका
कस्तुकाकोलोदात्यूहःकालकण्ठकः।

दार्व्वाघाट१ (पपीहा के नाम) सारंग१ तोकक२ चातक ३ (मुरगा के नाम) कृकवाकु१ ताम्रचूड़२ कुक्कुट ३ चरणायुध४॥१७॥ (गौरवा के नाम) चटक१ कलविङ्क२ (गौरैया के नाम) चटका१ (इन के बच्चा का नाम) चाटकैर१ (इन की बच्ची) चटका१॥१८॥ (कोइला के नाम) कर्क्करेटु १ करेटु २ (मुर्गा चिरई के नाम) कृकण१ क्रकर २ (कोकिल वा कोयल के नाम) बनप्रिय १ परभृत २ कोकिल ३ पिक ४॥१९॥ (कौवा के नाम) काक १ करट २ अरिष्ट ३ बलिपुष्ट ४ सकृत्प्रजा ५ ध्वांक्ष ६ आत्मघोष ७ परभृत ८ बलिभुक् ९ वायस १०॥२०॥ चिरञ्जीवी ११ एकदृष्टि १२ मौकुलि १३ (डोंव काक अर्थात् धूमिले कौवा के नाम) द्रोणकाक१ काकोल २ (काले कौवा के नाम) दात्यूह १ कालकण्ठक२॥

आतापिचिल्लौ दाक्षाय्यगृध्रौ कीरशुकौ समौ २१ क्रुङ्क्रौञ्चाऽथ बकः कह्वः पुष्कराह्वस्तु सारसः। कोकश्चक्रश्चक्रवाको रथाङ्गाह्वयनामकः २२ कादम्बः कलहंसस्स्यादुत्क्रोशकुररौ समौ। हंसास्तु श्वेतगरुतश्चक्राङ्गा मानसौकसः २३ राजहंसास्तु ते चञ्चुचरणैर्लोहितैः सिताः। मलिनैर्मल्लिकाक्षास्ते धार्त्तराष्ट्राः सितेतरैः २४ शरारिराटिराडिश्च बलाका बिसकण्ठिका। हंसस्य योषिद्वरटा सारसस्य तु लक्ष्मणा २५

(चील्ह के नाम) आतापी १ चिल्ह २ (गीध के नाम) दाक्षाय्य १ गृध्र २। (सुआ के नाम) कीर १ शुक २॥ २१॥ (करांकुलि के नाम) क्रुङ् १ क्रौञ्च २ (बगुला के नाम) बक १ कह्व २ (सारस के नाम) पुष्कराह्व १ सारस २ (चकई चकवा के नाम) कोक १ चक्र २ चक्रवाक ३ रथांग ४॥ २२॥ (बत्तख वा बत के नाम) कादम्ब १ कलहंस २ (कुररी के नाम) उत्क्रोश १ कुरर २ (हंस के नाम) हंस १ श्वेतगरुत् २ चक्रांग ३ मानसौकाः ४ ॥ २३॥ (जिन हंसों के चोंच पैर लाल और देह उज्ज्वल होती है उन का नाम) राजहंस १ (और जिन के चरणादि मैले हों उन का नाम) मल्लिकाक्ष १ (जिन के काले चंचु चरणादि हों उन का नाम) धार्त्तराष्ट्र १॥ २४॥ (आड़ी के नाम) शरारि १ आटि २ आडि ३ (बगुला के दूसरी जाति के नाम) बलाका १ बिसकण्ठिका २ (हंसी का नाम) वरटा १ (सारस की स्त्री का नाम) लक्ष्मणा १॥ २५॥ २५॥

जतुका जिनपत्रा स्यात्परोष्णी तैलपायिका। वर्वणा मक्षिका नीला सरघा मधुमक्षिका २६ पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिका। दंशी तज्जातिरल्पा स्याद्गन्धोली वरटा द्वयोः २७ भृङ्गारी भीरुका चीरी झिल्लिका च समा इमाः। समौ पतङ्गशलभौ खद्योतो ज्योतिरिङ्गणः २८ मधुव्रतो मधुकरो मधुलिण्मधुपालिनः। द्विरेफपुष्पलिड्भृङ्गषट्पदभ्रमरालयः २९ मयूरो वर्हिणो वर्ही नीलकण्ठो भुजङ्गभुक्। शिखावलः शिखी केकी मेघनादानुलास्यपि ३०

(चमगूदरी के नाम) जतुका १ अजिनपत्रा २ (गोदुर के नाम) परोष्णी १ तैलपायिका २ (माखी के नाम) वर्वणा १ मक्षिका २ नीला ३ (शहद की मक्खी के नाम) सरघा १ मधुमक्षिका २॥ २६॥ (पाखी के नाम) (पतंगिका १ पुत्तिका २ (डांस के नाम) दंश १ वनमक्षिका २ (मसा का नाम) दंशी १ (बर्रे के नाम) गन्धोली १ वरटा २॥ २७॥ (झींगुर के नाम) भृंगारी १ भीरुका २ चीरी ३। झिल्लिका ४ (फनिगा के नाम) पतंग १ शलभ २ (जुगुनू के नाम) खद्योत १ ज्योतिरिंगण २॥ २८॥ (भँवरा के नाम) मधुव्रत १ मधुकर २ मधुलिट् ३ मधुप ४ अली ५ द्विरेफ ६ पुष्पलिट् ७ भृंग ८ षट्पद ९ भ्रमर १० अलि ११॥ २९॥ (मुरैला वा मोर के नाम) मयूर १ वर्हिण २ वर्ही ३ नीलकण्ठ ४ भुजंगभुक ५ शिखावल ६ शिखी ७ केकी ८ मेघनादानुलासी ९॥ ३०॥

केका वाणी मयूरस्य समौ चन्द्रकमेचकौ । शिखा चूडा शिखण्डस्तु पिच्छबर्हे नपुंसके ३१ खगे विहङ्गविहगविहङ्गमविहायसः । शकुन्तिपक्षिशकुनिशकुन्तशकुनद्विजाः ३२ पतत्रिपत्रिपतगपतत्पत्ररथाण्डजाः । नगौकोवाजिविकिरविविष्किरपतत्रयः ३३ नीडोद्भवा गरुत्मन्तः पित्सन्तो नभसङ्गमाः । तेषां विशेषा हारीतो मद्गुः कारण्डवः प्लवः ३४ तित्तिरिः कुक्कुभो लावो जीवञ्जीवश्चकोरकः । कोयष्टिकष्टिट्टिभको वर्तको वर्तिकादयः ३५

(मोर की बोली का नाम) केका १ (मोर के पङ्खों के बुन्दकों के नाम) चन्द्रक १ मेचक २ (मोर की चोटी के नाम) शिखा १ चूडा २ (उसके पङ्खों के नाम) शिखण्ड १ पिच्छ २ बर्ह ३ ॥ ३१ ॥ (चिरई वा चिड़िया वा पक्षी के नाम) खग १ विहंग २ विहग ३ विहंगम ४ विहायस ५ शकुन्ति ६ पक्षी ७ शकुनि ८ शकुन्त ९ शकुन १० द्विज ११ ॥ ३२ ॥ पतत्री १२ पत्री १३ पतग १४ पतत् १५ पत्ररथ १६ अण्डज १७ नगौका १८ वाजी १९ विकिर २० वि २१ विष्किर २२ पतत्रि २३ ॥ ३३ ॥ नीडोद्भव २४ गरुत्मान् २५ पित्सन् २६ नभसंगम २७ (हरिल का नाम) हारीत १ (जलमुर्गी का नाम) मद्गु १ (बतख के नाम) कारण्डव १ प्लव २ ॥ ३४ ॥ (तीतिर का नाम) तित्तिर १ (बनमुर्गी का नाम) कुक्कुभ १ (लवा के नाम) लाव १ जीवन २ (चकोर के नाम) जीव १ चकोर २ (टिटहरी के नाम) कोयष्टिक १ टिट्टिभक २ (बटई के नाम) वर्तक १ वर्तिक २ ॥ ३५ ॥

गरुत्पक्षच्छदाः पत्रं पतत्रञ्च तनूरुहम्। स्त्री
पक्षतिः पक्षमूलञ्च चञ्चुस्त्रोटिरुभे स्त्रियौ ३६
प्रडीनोड्डीनसण्डीनान्येताः खगगतिक्रियाः। पेशी
कोशो द्विहीनेऽण्डं कुलायो नीडमस्त्रियाम् ३७
पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशु-
ः। स्त्रीपुंसौ मिथुनन्द्वन्द्वं युग्मन्तु युगलं युगम्
३८ समूहे निवहव्यूहसन्दोहविसरव्रजाः। स्तो-
मौघनिकरव्रातवारसङ्घातसञ्चयाः ३९ समु-
दायस्समुदयस्समवायश्चयो गणाः। स्त्रिया-
न्तु संहतिर्वृन्दं निकुरम्बं कदम्बकम् ४०

(पंख वा परवा के नाम) गरुत् १ पक्ष २ छद ३ पत्र ४ पतत्र ५ तनूरुह ६ (पं-
खना की जड़ का नाम) पक्षति १ (चोंच के नाम) चञ्चु १ त्रोटि २॥ ३६॥
(पक्षियों के तिरछे उड़ने का नाम) प्रडीन १ (ऊपर के उड़ने का नाम)
उड्डीन १ (अच्छे प्रकार उड़ने का नाम) सण्डीन १ (अण्डा के नाम)
पेशी १ कोश २ अण्ड ३ (ओझ के नाम) कुलाय १ नीड २॥ ३७॥ (पक्षि
यों के वा सब के बच्चाओं के नाम) पोत १ पाक २ अर्भक ३ डिम्भ ४ पृथु-
क ५ शावक ६ शिशु ७ (स्त्री पुरुष के जोड़े के नाम) स्त्रीपुंसौ १ मिथुन
२ द्वन्द्व ३ (दो के नाम) युग्म १ युगल २ युग ३॥ ३८॥ (समूह वा झुं-
ड वा झुंड के नाम) समुदाय १ समुदय २ समवाय ३ चय ४ गण ५
संहति ६ वृन्द ७ निकुरम्ब ८ कदम्बक ९ समूह १० निवह ११ व्यू-
ह १२ सन्दोह १३ विसर १४ व्रज १५ स्तोम १६ ओघ १७ निकर १८
व्रात १९ वार २० संघात २१ सञ्चय २२॥ ३९॥ ४०॥

वृन्दभेदास्समैर्वर्गस्संघ सार्थौतु जन्तुभिः।
सजातीयैः कुलंयूथन्तिरश्चाम्पुन्नपुंसकम् ४१
पशूनांसमजोऽन्येषांसमाजोऽथसधर्म्मिणाम्
स्यान्निकायःपुंजराशी तूत्करः कूटमस्त्रियाम् ।
४२ कापोतशौकमायूरतैत्तिरादीनितद्गणे ।
गृहासक्ताःपक्षिमृगाश्छेकास्ते गृह्यकाश्च
ते ४३ ॥ इति सिंहादिवर्गः॥

मनुष्या मानुषा मर्त्या मनुजा मानवा नराः।
स्युःपुमांसःपञ्चजनाःपुरुषाःपूरुषानरः १

(प्राणी वा अप्राणी का जहां एक ही जाति का झुण्ड हो उसका नाम) वर्ग १ (जो केवल जन्तुओं का समूह है उसके नाम) संघ १ सार्थ २ (सजातीय जन्तुओं के झुण्ड का नाम) कुल १ (पक्षियों का समूह) यूथ १ ॥ ४१ ॥ (पशुओं के झुण्ड का नाम) समज १ (पशुओं को छोड़ अन्य झुण्ड का नाम) समाज १ (एक धर्म्म वालों के समूह का नाम) निकाय १ (अन्नादि के ढेर के नाम) पुञ्ज १ राशि २ उत्कर ३ कूट ४ ॥ ४२ ॥ (कबूतर के झुंड का नाम) कापोत १ (शुआओं के झुण्ड का नाम) शौक १ (मोरों के झुण्ड का नाम) मायूर १ (तित्तिरों के झुण्ड का नाम) तैत्तिर १ इत्यादि (पालतू पक्षी और मृगों के नाम) छेक १ गृह्यक २ ॥ ४३ ॥ इति सिंहादिवर्गः ॥

(मनुष्य के नाम) मनुष्य १ मानुष २ मर्त्य ३ मनुज ४ मानव ५ नर ६ पुमान् ७ पञ्चजन ८ पुरुष ९ पूरुष १० ना ११ ॥ १ ॥

स्त्री योषिद बला योषा नारी सीमन्तिनी वधूः। प्र-
तीपदर्शिनी वामा वनिता महिला तथा २ वि-
शेषास्त्वङ्गना भीरुः कामिनी वाम लोचना।
प्रमदा मानिनी कान्ता ललना च नितम्बिनी ३
सुन्दरी रमणी रामा कोपना सैव भामिनी। वरा-
रोहा मत्तकाशिन्युत्तमा वरवर्णिनी ४ कृता-
भिषेका महिषी भोगिन्योऽन्या नृपस्त्रियः। प-
त्नी पाणिगृहीती च द्वितीया सहधर्मिणी ५

(स्त्री के नाम) स्त्री १ योषित् २ अबला ३ योषा ४ नारी ५ सीमन्ति-
नी ६ वधू ७ प्रतीपदर्शिनी ८ वामा ९ वनिता १० महिला ११॥ २॥
(अच्छे अंग वाली स्त्री का नाम) अंगना १ (डरभुनही का नाम)
भीरु १ (काम युत स्त्री का नाम) कामिनी १ (सुन्दर नेत्र वाली
का नाम) वामलोचना १ (बहुत काम वती का नाम) प्रमदा १
(अगाय कोप वाली का नाम) मानिनी १ (मन हरने वाली का
नाम) कान्ता १ (दुलारी स्त्री का नाम) ललना १ नितम्बिनी २
॥ ३॥ (सुन्दर अंग वाली स्त्री का नाम) सुन्दरी १ (जिस में अ-
ति चित्त रमित हो) रमणी १ रमणा २ (विहार के योग्य स्त्री
का नाम) रामा १ (रिसही के नाम) कोपना १ भामिनी २ (बहुत ही उ-
त्तम स्त्री का नाम) वरारोहा १ मत्तकाशिनी २ उत्तमा ३ वरवर्णिनी ४
॥ ४॥ (जिस रानी का अभिषेक हुआ हो उस का नाम) महिषी १ (महि-
षी को छोड़ अन्य राजा की स्त्री का नाम) भोगिनी १ (व्याही हुई
स्त्री के नाम) पत्नी १ पाणिगृहीती २ द्वितीया ३ सहधर्मिणी ४॥ ५॥

भार्य्याजायाथ पुम्भूम्नि दाराःस्यात्तु कुटुम्बिनी। पुरन्ध्री सुचरित्रा तु सती साध्वी पतिव्रता ६ कृत-सापत्निका ध्यूढाधिविन्नाथ स्वयम्वरा। पति-म्वरा च वर्य्याथ कुलस्त्री कुलपालिका ७ कन्या कुमारी गौरी तु नग्निकानागतार्त्तवा। स्यान्मध्य-मादृष्टरजास्तरुणी युवतिस्समे ८ समाःस्नु-षाजनी वध्वश्चिरिण्टी तु सुवासिनी। इच्छा-वती कामुका स्याद्वृषस्यन्ती तु कामुकी ९।

(भार्य्या १ जाया २ दारा ३ (जिस के पति पुत्र दोनों विद्यमान होंउ-स के नाम) कुटुम्बिनी १ पुरन्ध्री २ (पतिव्रता स्त्री के नाम) सुच-रित्रा १ सती २ साध्वी ३ पतिव्रता ४ ॥ ६ ॥ (जिस के बहुत स्त्रियां हों उनमें जो प्रथम ब्याही गई हो उसके नाम) कृतसापत्निका १ अध्यूढा २ अधिविन्ना ३ (जो अपने आप स्वयम्वरादि में पति की इ-च्छा करे उसके नाम) स्वयम्वरा १ पतिम्वरा २ वर्य्या ३ (कुलवती के नाम) कुलस्त्री १ कुलपालिका २ ॥ ७ ॥ (पांच वर्ष की कन्या के नाम) कन्या १ कुमारी २ (दश वर्ष की कन्या के नाम) गौरी १ न-ग्निका २ अनागतार्त्तवा ३ (प्रथम रजोवती के नाम) मध्यमा १ दृष्टर-जा २ (जुवानी स्त्री के नाम) तरुणी १ युवति २ युवती ३ ॥ ८ ॥ (पतो-हू के नाम) स्नुषा १ जनी २ वधू ३ (जो कि किञ्चित् युवावस्था को प्रा-प्त ब्याही हुई निजपिता के घर में रहती हो उसके नाम) चिरिण्टी १ चिरण्टी २ सुवासिनी ३ (जो धनादि की इच्छा करती हो उसके नाम) इच्छावती १ कामुका २ (मैथुन की इच्छा किये हुई के नाम) वृषस्यन्ती १ कामुकी २ ॥ ९

कान्तार्थिनी तु या याति सङ्केतं साभिसारिका। पुं-
श्चली धर्षिणी बन्धक्यसती कुलटेत्वरी १० स्वै-
रिणी पांशुला च स्यादशिश्वी शिशुना विना। अ-
वीरा निष्पतिसुता विश्वस्ता विधवे समे ११ आ-
लिस्सखी वयस्याथ पतिवत्नी सभर्तृका। वृद्धा-
पलिक्नी प्राज्ञी तु प्रज्ञा प्राज्ञा तु धीमती १२ शूद्री
शूद्रस्य भार्य्या स्याच्छूद्रा तज्जातिरेव मा। आभी-
री तु महाशूद्री जातिपुंयोगयोस्समा १३

(जो पति की इच्छा कर कामार्त्त हो संकेत को जावे उस का नाम) अभि-
सारिका १ (व्यभिचारिणी अर्थात् छिनार के नाम) पुंश्चली १ धर्षि-
णी २ बन्धकी ३ असती ४ कुलटा ५ इत्वरी ६॥ १०॥ स्वैरिणी ७ पां-
शुला ८ (बिन पुत्र वाली का नाम) अशिश्वी १ (जिस के पति पु-
त्र न हों उस का नाम) अवीरा १ (रांड के नाम) विश्वस्ता १ विधवा
२ ।११।। (सखी व साथ के खेलने वाली के नाम) आलि १ सखी २
वयस्या ३ (अहिवाती के नाम) पतिवत्नी १ सभर्तृका २ (बूढ़ी स्त्री
के नाम) वृद्धा १ पलिक्नी २ (बुद्धि व समझदार स्त्री के नाम) प्रा-
ज्ञी १ प्रज्ञा २ (अति बुद्धिमती के नाम) प्राज्ञा १ धीमती २॥ १२॥
(चाहे अन्य जाति भी हो पर शूद्र की स्त्री हो उस का नाम) शू-
द्री १ (शूद्रिनि अन्य की स्त्री हो तो उस का नाम) शूद्रा १ (अ-
हिरिनि के नाम) आभीरी १ महाशूद्री २॥ १३॥ १३॥

अर्य्याणीस्वयमर्य्या स्यात्क्षत्रिया क्षत्रियाण्यपि। उपाध्यायाप्युपाध्यायी स्यादाचार्य्यापि च स्वतः १४ आचार्य्यानी तु पुंयोगे स्यादर्य्यी क्षत्रियी तथा। उपाध्यायान्युपाध्यायी पोटा स्त्री पुंसलक्षणा १५ वीरपत्नी वीरभार्य्या वीरमाता तु वीरसूः। जातापत्या प्रजाता च प्रसूता च प्रसूतिका १६ स्त्री नग्निका कोटवी स्याद्दूती सञ्चारिके समे। कात्यायन्यर्द्धवृद्धा या काषायवसनाधवा १७

(बनिनि के नाम) अर्य्याणी १ अर्य्या २ (क्षत्रिनि के नाम) क्षत्रिया १ क्षत्रियाणी २ (पढ़ाने वाले पण्डित की स्त्री के नाम) उपाध्याया १ उपाध्यायी २ (जो अपने आप मंत्रों के अर्त्थ कह सके उस का नाम) आचार्य्या १ ॥ १४ ॥ (चाहे मंत्रादि की व्याख्यान कर सके पर आचार्य्य की स्त्री हो उस का नाम) आचार्य्यानी १ तिसी प्रकार (अर्य्य की स्त्री) अर्य्यी २ (क्षत्रिय की) क्षत्रियी १ (पढ़ाने वाले की स्त्री के इसी प्रकार के नाम) उपाध्यायानी १ उपाध्यायी २ (जिस में स्त्री पुरुष दोनों के लक्षण हों अर्त्थात् कुच और मोछ दोनों हों उस का नाम) पोटा १ ॥ १५ ॥ (वीर की स्त्री के नाम) वीरपत्नी १ वीरभार्य्या २ (वीर की माता के नाम) वीरमाता १ वीरसू २ (प्रसूता अर्त्थात् सौरिहाई स्त्री के नाम) जातापत्या १ प्रजाता २ प्रसूता ३ प्रसूतिका ४ ॥ १६ ॥ (नंगी स्त्री के नाम) नग्निका १ कोटवी २ (दूती के नाम) दूती १ दूति २ सञ्चारिका ३ (अध बैस विधवा स्त्री का नाम) कात्यायनी १ ॥ १७ ॥

सैरन्ध्री परवेश्मस्थास्ववशा शिल्पकारिणी।
असिक्नी स्यादवृद्धा या प्रेष्यान्तःपुरचारिणी १८
वारस्त्री गणिका वेश्या रूपाजीवाथ सा जनैः।
सत्कृता वारमुख्या स्यात्कुट्टनी शम्भली समे।
१९ विप्रश्निका त्वीक्षणिका दैवज्ञाथ रजस्वला।
स्त्रीधर्म्मिण्यविरात्रेयी मलिनी पुष्पवत्यपि २०
ऋतुमत्यप्युदक्यापि स्याद्रजः पुष्पमार्त्तवम्।
श्रद्धालुर्दोहदवती निष्कला विगतार्त्तवा २१
आपन्नसत्वा स्याद्गुर्व्विण्यन्तर्व्वत्नी च गर्भिणी।

(लौंडी का नाम) सैरन्ध्री १ (जो जवानी स्त्री घर के भीतर का कार्य करती हो उस लौंडी के नाम) असिक्नी १॥ १८॥ (पतुरिया के नाम) वारस्त्री १ गणिका २ वेश्या ३ रूपाजीवा ४ (जिस वेश्या का बड़ा आदर जन करते हों उस का नाम) वारमुख्या १ (कुटनी के नाम) कुट्टनी १ शम्भली २॥ १९॥ (जो देखत ही नीक जबून जानले उस के नाम) विप्रश्निका १ ईक्षणिका २ दैवज्ञा ३ (रजस्वला के नाम) रजस्वला १ स्त्रीधर्म्मिणी २ अवि ३ आत्रेयी ४ मलिनी ५ पुष्पवती ६॥ २०॥ ऋतुमती ७ उदक्या ८ (स्त्री के पुष्प अर्त्थात जो उन के मास २ पर भग से रुधिर वहता है उस के नाम) रजः १ पुष्प २ आर्त्तव ३ (जो गर्भ रहने पर उत्तमा आदि की इच्छा करती है उस के नाम) श्रद्धालु १ दोहदवती २ (रजोहीन स्त्री के नाम) निष्कला १ विगतार्त्तवा २॥ २१॥ (गर्भिणी स्त्री के नाम) आपन्नसत्वा १ गुर्व्विणी २ अन्तर्वत्नी ३ गर्भिणी ४॥

गणिकादेस्तु गाणिक्यं गार्भिणं यौवतं गणे २२ पुनर्भूर्दिधिषूरूढा द्विस्तस्या दिधिषुः पतिः। सतु द्विजोऽग्रेदिधिषूस्सैव यस्य कुटुम्बिनी २३ कानीनः कन्यकाजातस्सुतोऽथ सुभगासुतः। सौभागिनेयस्स्यात्पारस्त्रैणेयस्तु परस्त्रियाः २४ पैतृष्वस्रेयस्स्यात्पैतृष्वस्रीयश्च पितृष्वसुः। सुतो मातृष्वसुश्चैवं वैमात्रेयो विमातृजः २५ अथ बान्धकिनेयस्स्याद्बन्धुलश्चासतीसुतः। कौलटेरः कौलटेयो भिक्षुकी तु सती यदि २६

(वेश्याओं के झुण्ड का नाम) गाणिक्य १ (गर्भिणियों का समूह) गार्भिण्य १ (युवतियों का समूह) यौवत १॥२२॥ (उढ़री के नाम) पुनर्भू १ दिधिषू २ (उढ़री के पति का नाम) दिधिषु १ (कदाचित् उढ़री का पति ब्राह्मण क्षत्री वैश्य हो और उस के वही उढ़री हो गृह कृत्य करने वाली हो तो उस पति का नाम) अग्रेदिधिषू १ (बिना ब्याही स्त्री के पुत्र के नाम) कानीन १ कन्यकाजात २ (सुभगा के पुत्र का नाम) सुभगासुत १ सौभागिनेय २ (पराई स्त्री के पुत्र का नाम) पारस्त्रैणेय १॥२४॥ (फूफी के पुत्र के नाम) पैतृष्वस्रेय १ पैतृष्वस्रीय २ (मौसी के पुत्र के नाम) मातृष्वस्रेय १ मातृष्वस्रीय २ (सौतेले भाई के नाम) वैमात्रेय १ विमातृज २॥२५॥ (कुलटा के पुत्र के नाम) बान्धकिनेय १ बन्धुल २ असतीसुत ३ कौलटेर ४ कौलटेय ५ (भिक्षियारिनि के पुत्र के नाम) कौलटिनेय १ कौलटेय २ (पुत्र के नाम)॥

तद्दा कौलटिनेयो ऽस्याः कौलटेयो ऽपि चात्मजः।
आत्मजस्तनयस्सूनुस्सुतः पुत्रस्स्त्रियान्त्वमी २७
आहुर्दुहितरं सर्व्वे ऽपत्यन्तोकं तयोस्समे। स्वजा
ते त्वौरसौरस्यौ तातस्तु जनकः पिता २८ जन-
यित्री प्रसूर्म्माता जननी भगिनी स्वसा। नना-
न्दा तु स्वसा पत्युर्नप्त्री पौत्री सुतात्मजा २९ भा-
र्य्यास्तु भ्रातृवर्गस्य यातरस्स्युः परस्परम्। प्र-
जावती भ्रातृजाया मातुलानी तु मातुली ३० पति-
पत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः। पितु-
र्भ्राता पितृव्यस्स्यान्मातुर्भ्राता तु मातुलः ३१

आत्मज १ तनय २ सूनु ३ सुत ४ पुत्र ५॥ २६॥ २७॥ तोक ६ अपत्य ७ (क-
न्या के नाम) आत्मजा १ तनया २ सूनु ३ सुता ४ पुत्री ५ दुहिता ६
अपत्या ७ तोक ८ (जो सवर्णा स्त्री मे अपना से उत्पन्न हो उस पुत्र
के नाम) औरस १ उरस्य २ (पिता के नाम) तात १ जनक २ पिता ३
॥ २८॥ (माता के नाम) जनयित्री १ प्रसू २ माता ३ जननी ४ (बहि-
न के नाम) भगिनी १ स्वसा २ (ननद का नाम) ननान्दा १ (नाति-
नि के नाम) नप्त्री १ पौत्री २ सुतात्मजा ३ ॥ २९॥ (देवरानी जेठानी
के नाम) याता १ (भौजाई वा भैहो के नाम) प्रजावती १ भ्रातृजा-
या २ (मामी के नाम) मातुलानी १ मातुली २॥ ३०॥ (पति औ-
र स्त्री की माता का नाम) श्वश्रू १ (पति और स्त्री के बाप का ना-
म) श्वशुर १ (पित्ती वा चाचा का नाम) पितृव्य १ (मामा का ना-
म) मातुल १॥ ३१॥

श्याला स्युर्भ्रातरः पत्न्याः स्वामिनो देवृदेवरौ। स्वस्रीयो भागिनेयस्स्याज्जामाता दुहितुः पतिः ३२ पितामहः पितृपिता तत्पिता प्रपितामहः। मातुर्मातामहाद्येवं सपिण्डास्तु सनाभयः ३३ समानोदर्य्यसोदर्य्यसगर्भ्यसहजास्समाः। सगोत्रबान्धवज्ञातिबन्धुस्वस्वजनास्समाः ३४ ज्ञातेयम्बन्धुता तेषां क्रमाद्भावसमूहयोः। धवः प्रियः पतिर्भर्ता जारस्तूपपतिस्समौ ३५

(शाले का नाम) श्याल १ (देवर के नाम) देवा १ देवर २ (भैने के नाम) स्वस्रीय १ भागिनेय २ (दमाद का नाम) जामाता १ ॥ ३२ ॥ (आजा के नाम) पितामह १ पितृपिता २ (परपाजा का नाम) प्रपितामह १ (नाना के नाम) मातामह १ मातृपिता २ (नाना के बाप का नाम) प्रमातामह १ (पुश्त के भाई बन्धुओं के नाम) सपिण्ड १ सनाभि २ ॥ ३३ ॥ (सगे भाई के नाम) समानोदर्य्य १ सोदर्य्य २ सगर्भ्य ३ सहज ४ (एक गोत्र वालों के अर्थात् सम गोत्रियों के नाम) सगोत्र १ बान्धव २ ज्ञाति ३ बन्धु ४ स्व ५ स्वजन ६ ॥ ३४ ॥ (बिरादरी के भाव का नाम) ज्ञातेय १ (परिवार के झुण्ड का नाम) बन्धुता १ (दुल्हा के नाम) धव १ प्रिय २ पति ३ भर्त्ता ४ (जिस के साथ ब्याही हो उस से अन्य से मैथुन कराती हो तो उस पति के नाम) जार १ उपपति २ ॥ ३५ ॥

अस्त्रनेजारजः कुण्डो मृते भर्त्तरि गोलकः । भ्रात्री-
यो भ्रातृजो भ्रातृ भगिन्यौ भ्रातरावुभौ ३६ माता
पितरौ पितरौ मातर पितरौ प्रसूजनयितारौ । श्व-
श्रूश्वशुरौ श्वशुरौ पुत्रौ पुत्रश्च दुहिता च ३७ दम्प-
ती जम्पती जायापती भार्य्यापती च तौ । गर्भाशा-
यो जरायुः स्यादुल्वञ्च कललोऽस्त्रियाम् ३८
सूतिमासो वैजननो गर्भो भ्रूण इमौ समौ । तृ-
तीया प्रकृतिः षण्डः क्लीवः पण्डो नपुंसके ३९

(अपने पति के जीते ही अन्य पति से जो पुत्र हो उस का नाम) कुण्ड १
(और जो पति के मरने पर अन्य पति से उत्पन्न हो उस का नाम) गो-
लक १ (भतीजे के नाम) भ्रात्रीय १ भ्रातृव्य २ भ्रातृज ३ (बहिन भाई
का नाम) भ्रातरौ १॥ ३६॥ (जहां माता पिता का साथ ही कहना
हो उस के नाम) मातापितरौ १ पितरौ २ मातर पितरौ ३ प्रसूज-
नयितारौ ४ (ऐसे ही सासु श्वशुर के नाम) श्वश्रूश्वशुरौ १
श्वशुरौ २ (इसी प्रकार कन्या पुत्र का नाम) पुत्रौ १॥ ३७॥ (स्त्री
पुरुष के नाम) दम्पती १ जम्पती २ जायापती ३ भार्य्यापती ४।
(ओझरी के नाम) गर्भाशय १ जरायुज २ उल्व ३ (जब गर्भा-
धान होता है तो पांच रात्रि में पुरुष का काम और स्त्री का रक्त मि-
लकर जो कुछ बनता है उस का नाम) कलल १॥ ३८॥ (गर्भ रह-
ने से नववें वा दशवें मास के नाम जिस में लड़का उत्पन्न होता है)
सूतिमास १ वैजनन २ (गर्भ के नाम) गर्भ १ भ्रूण २ (हिजड़ा के
नाम) तृतीयाप्रकृति १ षण्ड २ क्लीव ३ पण्ड ४ नपुंसक ५॥ ३९॥

शिशुत्वं शैशवं बाल्यं तारुण्यं यौवनं समे। स्यात्स्थाविरं तु वृद्धत्वं वृद्धसङ्घेऽपि वार्द्धकम् ४० पलितं जरसा शौक्ल्यं केशादौ विस्रसा जरा। स्यादुत्तानशया डिम्भा स्तनपा च स्तनन्धयी ४१ बालस्तु स्यान्माणवको वयस्थस्तरुणो युवा। प्रवयाः स्थविरो वृद्धो जीनो जीर्णो जरन्नपि ४२ वर्षीयान्दशमी ज्यायान्पूर्वजस्त्वग्रियोऽग्रजः। जघन्यजे स्युः कनिष्ठयवीयोऽवरजानुजाः ४३ अमांसो दुर्बलश्छातो बलवान्मांसलोंऽसलः॥

(लड़काई वा लड़कपन के नाम) शिशुत्व १ शैशव २ बाल्य ३ (जुआनी के नाम) तारुण्य १ योवन २ (बुढापा के नाम) स्थाविर १ वृद्धत्व २ वार्द्धक ३ (बुढापाओं के भुण्ड का नाम) वार्द्धक १॥ ४०॥ (अति बुढाई के नाम) पलित १ विस्रसा २ जरा ३ (दुधपिई छोटी लड़की वा लड़के के नाम) उत्तानशया १ डिम्भ २ स्तनपा ३ स्तनंधयी ४॥ ४१॥ (सोलह वर्ष पर्यंत लड़के के नाम) बाल १ माणवक २ (जुआने पुरुष के नाम) वयस्थ १ तरुण २ युवा ३ (बूढे के नाम) प्रवयाः १ स्थविर २ वृद्ध ३ जीन ४ जीर्ण ५ जरन् ६॥ ४२॥ (अति बूढे के नाम) वर्षीयान् १ दशमी २ ज्यायान् ३ (ज्येष्ठ भाई के नाम) पूर्वज १ अग्रिय २ अग्रज ३ (छोटे भाई के नाम) जघन्यज १ कनिष्ठ २ कनीयान ३ यवीयान् ४ यविष्ठ ५ अवरज ६ अनुज ७॥ ४३॥ (दूबरे के नाम) अमांस १ दुर्बल २ छात ३ (बलगर के नाम) बलवान् १ मांसल २ अंसल ३॥

तुन्दिलस्तुन्दिभस्तुन्दी बृहत्कुक्षिः पिचण्डिलः ४४
अवटीटोऽवनाटश्चावभ्रटो नतनासिके। केशवः केशिकः केशी बलिनो वलिभस्समौ ४५
विकलाङ्गस्त्वपोगण्डः खर्वो ह्रस्वश्च वामनः।
खरणाः स्यात्खरणसो विग्रस्तु गतनासिके ४६
खुरणाः स्यात्खुरणसः प्रज्ञुः प्रगतजानुकः। ऊर्ध्वज्ञुरूर्ध्वजानुः स्यात्संज्ञुः स्यात्संहतजानुकः ४७
स्यादेडे बधिरः कुब्जे गडुलः कुकरे कुणिः॥

(तुँदारे मनुष्य के नाम) तुन्दिल १ तुन्दिभ २ तुन्दी ३ बृहत्कुक्षि ४ पिचण्डिल ५॥ ४४॥ (नक चपटे के नाम) अवटीट १ अवनाट २ अवभ्रट ३ नतनासिक ४ (अच्छे बाल वाले के नाम) केशव १ केशिक २ केशी ३ (जिसकी बुढापे के मारे खाल सिकुर गई हो उसके नाम) बलि १ बलिभ २॥ ४५॥ (जिसका अपने ही से कोई अंग अधिक वा कम हो उस के नाम) विकलांग १ अपोगण्ड २ (बवना के नाम) खर्व १ ह्रस्व २ वावन ३ (जिसकी सुड लिबारी नाक हो उसके नाम) खरणाः १ खरणस २ (नकटे के नाम) विग्र १ गतनासिक २ ॥ ४६॥ (जिस की पशु खुर सदृश नासिका हो उस के नाम) खुरणाः १ खुरणस २ (ल्यचरा के नाम) प्रज्ञु १ प्रगतजानुक २ (जिस की जांघ ऊंची हो उस के नाम) ऊर्ध्वज्ञु १ ऊर्ध्वजानु २ (जिस की मिली हुई पींली हो) संज्ञु १ संगतजानुक २॥ ४७॥ (बहिरा के नाम) एड १ बधिर २ (कुबरा के नाम) कुब्ज १ गडुल २ (रोगादि से जिस के हाथ में कुछ विकार हो) कुकर १ कुणि २॥

पृश्निरल्पतनौ श्रोणः पङ्गौ मुण्डस्तु मुण्डिते ४८
वलिरः केकरे खोडे खञ्जस्त्रिषु जरावराः। जडु-
लः कालकः पिप्लुस्तिलकस्तिलकालकः ४९
अनामयं स्यादारोग्यं चिकित्सा रुक्प्रतिक्रिया।
भेषजौषधभैषज्यान्यगदो जायुरित्यपि ५० स्त्री
रुग्रुजा चोपतापरोगव्याधिगदामयाः। क्षयशो-
षश्च यक्ष्मा च प्रतिश्यायस्तु पीनसः ५१ स्त्री-
क्षुत्क्षुतं क्षवः पुंसि कासस्तु क्षवथुः पुमान्। शो-
फस्तु श्वयथुः शोथः पादस्फोटो विपादिका ५२

(जिस का बहुत ही छोटा शरीर हो उस के नाम) पृश्नि १ अल्पतनु २ (पंगुला के नाम) श्रोण १ पंगु २ (मुंड़ा के नाम) मुण्ड १ मुण्डित २॥४८॥ (कञ्जा के नाम) वलिर १ केकर २ (लंगड़े के नाम) खोड़ १ खञ्ज २ (जिसके अंग में लशुनाकार चिन्ह हो उसके नाम) जडुल १ कालक २ पिप्लु ३ (देह के तिल के नाम) तिलक १ तिलकालक २॥४९॥ (बिना रोग के नाम) अनामय १ आरोग्य २ (इलाज करने के नाम) चिकित्सा १ रुक्प्रतिक्रिया २ (इलाज के नाम) भेषज १ औषध २ भैषज्य ३ अगद ४ जायु ५॥५०॥ (रोग के नाम) रुक् १ रुजा २ उपताप ३ रोग ४ व्याधि ५ गद ६ आमय ७ (क्षयी रोग के नाम) क्षय १ शोष २ यक्ष्मा ३ (पीनस के नाम) प्रतिश्याय १ पीनस २॥५१॥ (छींक के नाम) क्षुत् १ क्षुत २ क्षव ३ (खांसी के नाम) कास १ क्षवथु २ (सूजन वा सुजाव के नाम) शोफ १ श्वयथु २ शोथ ३ (बिवाई के नाम) पादस्फोट १ विपादिका २॥५२॥

किलासमसिध्मोकच्छ्वांतुपामपामाविचर्च्चिका।
कराडूःखर्ज्जूश्चकराडूयाविस्फोटपिटकस्त्रिषु।
५३ व्रणोऽस्त्रियामीर्म्ममरुःक्लीबेनाडीव्रणःः
पुमान्। कोठोमराडलकंकुष्ठंश्वित्रेदुर्न्नामका-
र्शसी ५४ अनाहस्तुविबन्धस्स्याद्ग्रहणीरुक्प्र
वाहिका। प्रच्छर्हिकावमिश्चस्त्रीपुमांस्तुवमथुस्स
माः ५५ व्याधिभेदाविद्रधिस्स्त्रीज्वरमेहभगन्दराः।
श्लीपदम्पादवल्मीकङ्केशघ्नस्त्विन्द्रलुप्तकः।
अश्मरीमूत्रकृच्छ्रंस्यात्पूर्व्वेशुक्रादयस्त्रिषु ५६

(स्यहुंओं के नाम) किलास१ सिध्म२ (खाजु के नाम) कच्छ्र१ पा-
म२ पामा३ विचर्च्चिका ४ (खजुवाव के नाम) कराडू१ खर्ज्जू२ क-
राडूया३ (फोरिया फोड़ा के नाम) विस्फोट१ पिटक२॥ ५३॥ (घा-
व के नाम) व्रण१ ईर्म्म२ अरु३ (नसूर का नाम) नाड़ीव्रण१ जो
उज्ज्वल चकत्ते पड़ जाते हैं उस कोढ़ के नाम) कोठ१ मराडलक२
(कुष्ठ के नाम) कुष्ठ१ श्वित्र२ (बवासीर के नाम) दुर्न्नामक१
अर्शः२॥ ५४॥ (कजई के नाम) आनाह१ विबन्ध२ (संग्रह-
णी के नाम) ग्रहणी१ रुक्प्रवाहिका२ (उछार या डाकने के ना-
म) प्रच्छर्दिका१ वमि२ वमथु३॥ ५५॥ (ब्यरथिया का नाम) वि
द्रधि१ (ज्वर का नाम) ज्वर१ (प्रमेह का नाम) मेह१ (भगन्दर अ-
र्थात् गुद समीप के फोड़ा का नाम) भगन्दर१ (हाड़ा रोग के ना-
म) श्लीपद१ पादवल्मीक२ (चाँई चूँई के नाम) केशघ्न१ इन्द्र
लुप्तक२ (ककड़ी रोग के नाम) अश्मरी१ मूत्रकृच्छ्र२॥ ५६॥

रोगहार्य्यगदङ्कारो भिषग्वैद्यौ चिकित्सके। वार्त्तो निरामयः कल्य उल्लाघो निर्गतो गदात् ५७

ग्लानग्लास्नू आमयावी विकृतो व्याधितोऽपटुः आतुरोऽभ्यमितोऽभ्यान्तः समौ पामनकच्छुरौ ५८

दद्रुणो दद्रुरोगी स्यादर्शोरोगयुतोऽर्शसः। वातकी वातरोगी स्यात्सातिसारोऽतिसारकी ५९

स्युः क्लिन्नाक्षे चुल्लचिल्लपिल्लाः क्लिन्नेऽक्ष्णि चाप्यमी। उन्मत्त उन्मादवति श्लेष्मलः श्लेष्मणः कफी। ६०

(वैद्य के नाम) रोगहारी १ अगदङ्कार २ भिषक् ३ वैद्य ४ चिकित्सक ५ (रोग रहित के नाम) वार्त्त १ निरामय २ कल्य ३ उल्लाघ ४ ॥ ५७ ॥ (रोग वश से क्षीण होजाने के नाम) ग्लान १ ग्लास्नु २ (रोगी के नाम) आमयावी १ विकृत २ व्याधित ३ अपटु ४ आतुर ५ अभ्यमित ६ अभ्यान्त ७ (खजुहा के नाम) पामन १ कच्छुर २ ॥ ५८ ॥ (दद्रुहा के नाम) दद्रुण १ दद्रुरोगी २ (बवासिरहा का नाम) अर्शस १ (बाइहा के नाम) वातकी १ वातरोगी २ (जिस के बहुत दस्त हों उस के नाम) सातिसार १ अतिसारकी २ ॥ ५९ ॥ (चिपरा वा चोंधरा के नाम) क्लिन्नाक्ष १ चुल्ल २ चिल्ल ३ पिल्ल ४ (चिपरी वा चोंधरी आंखों के भी यही नाम हैं) चुल्ल १ चिल्ल २ पिल्ल ३ (जो वात रोग से भ्रमित होके सिड़ीसा हो जावे) उन्मत्त १ उन्मादवान् २ (जिस के कफ जकड़ा हो उसके नाम) श्लेष्मल १ श्लेष्मण २ कफी ३ ॥ ६० ॥

न्युब्जो भुग्नरुजा वृद्धनाभौ तुन्दिलतुन्दिभौ।
किलासी सिध्मलोऽन्धोऽदृङ्मूर्च्छाले मूर्त्तमूर्च्छितौ
६१ शुक्रन्तेजो रेतसी च बीजवीर्य्येन्द्रियाणि च।
मायुः पित्तङ्कफश्लेष्मा स्त्रियान्तु त्वगसृग्धरा ६२
पिशितन्तरसम्मांसम्पललङ्क्रव्यमामिषम्। उत्त-
प्तं शुष्कमांसं स्यात्तद्वल्लूरन्त्रिलिङ्गनाम ६३
रुधिरेऽसृग्लोहितास्त्ररक्तक्षतजशोणितम्। बु-
क्काग्रमांसं हृदयं हृन्मेदस्तु वपा बसा ६४

(जो रोग से टेढ़ा हो उस के नाम) न्युब्ज १ (जो बाई से तोंदारा हो उस के नाम) वृद्धनाभि १ तुन्दिल २ तुन्दिभ ३ (सेहुआ वाले के नाम) किलासी १ सिध्मल २ (आंधरा के नाम) अन्ध १ अदृक् २ (मुरझाने के नाम) मूर्च्छाल १ मूर्त २ मूर्च्छित ३॥ ६१॥ (काम के नाम) शुक्र १ तेजः २ रेतः ३ बीज ४ वीर्य्य ५ इन्द्रिय ६ (पित्त के नाम) मायु १ पित्त २ (कफ के नाम) कफ १ श्लेष्मा २ (खाल के नाम) त्वक् १ असृग्धरा २॥ ६२॥ (मांस के नाम) पिशित १ तरस २ मांस ३ पलल ४ क्रव्य ५ आमिष ६ (सूखे मांस के नाम) उत्तप्त १ शुष्कमांस २ वल्लूर ३ वल्लूरा ४॥ ६३॥ (रक्त के नाम) रुधिर १ असृक् २ लोहित ३ अस्त्र ४ रक्त ५ क्षतज ६ शोणित ७ (करेज के नाम) बुक्का १ अग्रमांस २ (हृदय के नाम) हृदय १ हृत् २ (चरबी के नाम) मेदः १ वपा २ बसा ३॥ ६४॥

पश्चाद्ग्रीवा शिरामन्यानाडीतुधमनिःशिरा॥ति
लकंक्लोममस्तिष्कङ्गोर्दंकिट्टम्मलोऽस्त्रियाम्
६५ अन्त्रम्पुरीतद्गुल्मस्तुप्लीहापुंस्यथवस्नसा॥
स्नायुस्त्रियाङ्कालखण्डयकृतीतुसमेइमे ६६
सृणिकास्यन्दिनीलालादूषिकानेत्रयोर्मलम्
नासामलंतुसिंघाणंपिंजूषःकर्णयोर्मलम्॥
मूत्रम्प्रस्रावउच्चारावस्करौशमलंशकृत् ६७ पु
रीषंगूथवर्च्चस्कमस्त्रीविष्ठाविशौस्त्रियौ। स्या
त्कर्प्परःकपालोऽस्त्रीकीकसंकुल्यमस्थिच ६८

(गले के पीछे की नस का नाम) मन्या १ (नाड़ी के नाम) नाड़ी १ ध-
मनि २ शिरा ३ (तिल के नाम) तिलक १ क्लोम २ (गूदा के नाम)
मस्तिष्क १ गोर्द २ (काटि के नाम) किट्ट १ मल २॥ ६५॥ (आंत
के नाम) अन्त्र १ पुरीतत् २ (पिलही के नाम) गुल्म १ प्लीहा २
(नस के नाम) वस्नसा १ स्नायु २ (पेट में जो दहनी ओर वटि-
या हो उस को) कालखण्ड १ यकृत् २॥ ६६॥ (राल के नाम)
सृणिका १ स्यन्दिनी २ लाला ३ (कीचर का नाम) दूषिका १ (न-
क चपटी का नाम) सिंघाण १ (खूंट का नाम) पिंजूष १ (मूत के
नाम) मूत्र १ प्रस्राव २ (गूह के नाम) उच्चार १ अवस्कर २ शम-
ल ३ शकृत् ४॥ ६७॥ पुरीष ५ गूथ ६ वर्च्चस्क ७ विष्ठा ८ वि-
ट् ९। (कपार के नाम) कर्प्पर १ कपाल २ (हाड़ के नाम) की-
कस १ कुल्य २ अस्थि ३॥ ६८॥

स्यात्छरीरास्थ्नि कङ्कालः पृष्ठास्थ्नि तु कशेरुका। शिरोस्थीनि करोटिः स्त्री पार्श्वास्थनि तु पर्शुका ६९ अङ्गं प्रतीकोऽवयवोऽपघनोऽथ कलेवरम्। गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ७० कायो देहः क्लीबपुंसोः स्त्रियां मूर्त्तिस्तनुस्तनूः। पादाग्रं प्रपदम्पादः पदङ्घ्रिश्चरणोऽस्त्रियाम् ७१ तद्ग्रन्थी घुटिके गुल्फौ पुमान्पार्ष्णिस्तयोरधः। जङ्घा तु प्रसृता जानूरुपर्वाष्ठीवदस्त्रियाम् ७२ सक्थि क्लीबे पुमानूरुस्तत्सन्धिः पुंसि वङ्क्षणः। गुदन्त्वपानम्पायुर्ना वस्तिर्नाभेरधो द्वयोः ७३

(मांजरि का नाम) कङ्काल १ (रीढ़ का नाम) कशेरुका १ (खोपरी के नाम) करोटि १ करोटी २ (पँसुड़ी का नाम) पर्शुका १॥ ६९॥ (अंग के नाम) अंग १ प्रतीक २ अवयव ३ अपघन ४ (देह के नाम) कलेवर १ गात्र २ वपुः ३ संहनन ४ शरीर ५ वर्ष्म ६ विग्रह ७॥ ७०॥ काय ८ देह ९ मूर्त्ति १० तनु ११ तनू १२ (पैर के आगे के नाम) पादाग्र १ प्रपद २ (पांव के नाम) पाद १ पत् २ अंघ्रि ३ चरण ४॥ ७१॥ (घुट्टू के नाम) घुटिका १ गुल्फ २ (एड़ी का नाम) पार्ष्णि १ (जांघ के नाम) जंघा १ प्रसृता २ (फीली के नाम) जानु १ ऊरूपर्व्व २ अष्ठीवत् ३॥ ७२॥ (निरोह के नाम) सक्थि १ ऊरू २ (विङ्कुनी का नाम) वङ्क्षण १ (गुदा के नाम) गुद १ अपान २ पायु ३ (जहां मूत्र रहता है उस का नाम) वस्ति १॥ ७३॥

करिहस्ते गुलौ पद्मबीजकोश्यां त्रिषूत्तरे। वृ-
न्दारकौ रूपिमुख्यावेके मुख्यान्यकेवलाः २६
स्याद्दाम्भिकः कौक्कुटिको यश्चादूरेरितेक्षणः।
लालाटिकः प्रभोर्भालदर्शी कार्याक्षमश्च यः २७

भूभृन्नितम्बवलयचक्रेषु कटकोऽस्त्रियाम्।
सूच्यग्रे क्षुद्रशत्रौ च रोमहर्षे च कण्टकः १ पाको
पक्तिशिशू मध्यरत्ने नेतरि नायकः। पर्य्यङ्कः स्या-
त्परिकरे स्याद्व्याघ्रेऽपि च लुब्धकः अस्याद्व्याघ्रेऽम
पि लुब्धक इति पाठः॥ पेटकस्त्रिषु वृन्देऽपि गुरौ
देश्ये च देशिकः। खेटकौ ग्रामफलकौ धीवरेऽपि
च जालिकः ३

हाथी की सूंड़ का आगू कमल का बीच इन का नाम ) कर्णिका १
( देवता मनोज्ञ और श्रेष्ठ का नाम ) वृन्दारक १ ( मुख्य अन्य केवल का
नाम ) एक १॥ २६॥ २६॥ ( मायावी का नाम ) दाम्भिक १ ( जो दूर ही से
देखे उस का नाम ) कौक्कुटिक १ मुंह देखा और जो मालिक का
कार्य्य न कर सके उस का नाम ) लालाटिक १॥ २७॥

राजा, सूतर, कङ्गरा चक्र, इन का नाम ) कटक १ ( सुई की नो-
क छोटा शत्रु रोवां कटि आना इन का नाम ) कण्टक १॥ १॥
( पकाना बालक, रत्न मध्य, फौज का मालिक स्वामी इन का नाम )
नायक १ ( पलंग का नाम ) पर्य्यङ्क १ ( लोभी और बाघ का नाम
लुब्धक १॥ २॥ ( वृन्द और गुरू का नाम ) पेटक १ ( देश में उत्प-
न्न का नाम ) देशिक १ ( ग्राम और फलक का नाम ) खेटक १॥ ३॥

पुष्परेणौ च किञ्जल्कः शुल्कोऽस्त्री स्त्रीधनेऽपि च। स्यात्कल्लोलेऽप्युत्कलिका वाहीके भाववृन्दयोः ४ करिण्यामपि गणिका दारकौ बालभेदकौ। अन्धेऽप्यनेडमूकः स्याट्टङ्को दर्प्पोऽश्मदारणे ५ इति पञ्चरूपकाः॥ इति कान्तवर्गः॥

मयूखस्त्विट्करज्वालास्वलिबाणौ शिलीमुखौ। शङ्खे निधौ ललाटास्थ्नि कम्बौ नस्त्रीन्द्रियेऽपि खम् १८ घृणिज्वाले अपि शिखे इति खान्ताः॥ शैलवृक्षौ नगावगौ। आशुगौ वायुविशिखौ शरार्कविहगाः खगाः १९

(फूल की धूरि का नाम) किञ्जल्क १ (स्त्री के अर्थ देने के धन का नाम) शुल्क १ (कल्लोल का नाम) उत्कलिका १ (भाव और समूह का नाम) वाहीक १॥ ४॥ (हथिनी का नाम) गणिका १ (लड़कों का नाम) दारक १ (बहिर गूंगा अंधे का नाम) अनेडमूक १ (अहङ्कार दारण करने वाले और टांकी का नाम) टङ्क १॥ ५॥ इति कान्त वर्गः॥

(त्विट व शोभा किरण ज्वाला का नाम) मयूख १ (भ्रमर और बाण का नाम) शिलीमुख १ (निधि भेद और शंख का नाम) कम्बु १ (शून्य और इन्द्रिय का नाम) ख १॥ १८॥ (किरण, ज्वाला, चोटी इन का नाम) शिखा १॥ इति खान्ताः॥ (पर्व्वत और वृक्ष के नाम) नग १ अग १ (वायु और बाण का नाम) आशुग १ (बाण, सूर्यादि ग्रह, पक्षी इन का नाम) खग १॥ १९॥

पतङ्गौ पक्षिसूर्य्यौ च पूगः क्रमुकवृन्दयोः। पशवो-
ऽपि मृगा वेगः प्रवाहजवयोरपि २० परागः कौसुमे
रेणौ स्नानीयादौ रजस्यपि। गजेऽपि नागमातङ्गाव-
पाङ्गस्तिलकेऽपि च २१ सर्गः स्वभावनिर्म्मोक्षनि-
श्चयाध्यायसृष्टिषु। योगः सन्नहनोपायध्यान-
सङ्गतियुक्तिषु २२ भोगः सुखे स्त्र्यादिभृतावहे-
श्च फणकाययोः। चातके हरिणे पुंसि सारङ्गः शब-
ले त्रिषु २३ कपौ च प्लवगः शापे त्वभिषङ्गः पराभवे
यानाद्यङ्गे युगः पुंसि युगं युग्मे कृतादिषु २४ स्व-
र्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ॥

(पाँखी, सूर्य्य, पक्षी इन का नाम) पतंग २ (सुपारी और समूह का नाम)
पूग १ (हरिण मृगशिरा ढूंढ़ना इन का नाम) मृग १ (प्रवाह और ज़ोर
से चलने का नाम) वेग १॥ २०॥ (फूल की धूरि, गन्ध चूर्ण, ग्रहण, धू-
रि इन का नाम) पराग १ (हाथी के नाम) नाग १ मातंग २ (तिलक, ने-
त्रान्त, अंगहीन इन का नाम) अपांग १॥ २१॥ (स्वभाव, निर्म्मोक्ष, त्या-
ग, निश्चय, अध्याय सृष्टि इन का नाम) सर्ग १ (शस्त्र बांधना उपाय ध्या-
न संगति युक्ति इन का नाम) योग १॥ २२॥ (वेश्या हाथी घोड़ा आदि
के पोषण करने का नाम) सुख १ (सर्प्प के फण और देह का नाम) भो-
ग १ चातक, हरिण, कबुले रंग का नाम) सारंग १॥ २३॥ (वानर मे-
ढ़ु का, सारथि का नाम) प्लवग १ (शाप और अनादर का नाम) अभि-
षंग १ (जुआ, द्वय, सत्य युगादि का नाम) युग २॥ २४॥ (स्वर्ग, बा-
ण, गाय, बैल, वाणी, वज्र, दिशा, नेत्र, किरण, भूमि, जल इन का नाम) गो १

लक्ष्य हस्त्या स्त्रियाम्पुंसि गौर्ल्लिङ्गं चिह्न शेफ-
सोः २५ शृङ्गं प्राधान्य सान्वोश्च वराङ्गं मूर्द्ध गु-
ह्ययोः। भगं श्रीकाम माहात्म्य वीर्य्य यत्नार्क की-
र्तिषु २६॥ इति गान्ताः॥ परिघः परिघातेऽस्त्रेऽघोघो
वृन्देऽम्भसां रये। मूल्ये पूजा विधावर्घोऽहो दुःखव्यस-
नेष्वघम् २७ त्रिष्विष्टेऽल्पे लघुः॥ इति घान्ताः॥
काचाः शिक्य मृद्भेदहग्रुजः॥ विपर्य्यासे विस्तरे च
प्रपञ्चः पावके शुचिः २८ मास्यमात्ये चाप्युपधे पुं-
सि मेध्ये सिते त्रिषु। अभिष्वङ्गे स्पृहायाञ्च गभ-
स्तौ च रुचिः स्त्रियाम् २९॥ इति चान्ताः॥

(चिन्ह और शिश्न इन्द्रिय का नाम) लिंग १॥ २५॥ (प्रभुता और
कंगूरा का नाम) शृंग १ (मस्तक और योनि का नाम) वरांग १
(श्री, इच्छा, ऐश्वर्य्य, माहात्म्य, यत्न, सूर्य्य, कीर्ति, योनि इन का नाम)
भग १॥ २६॥ इति गान्ताः॥ (हनन और अस्त्र का नाम) परिघ १ (समू-
ह और जल के वेग का नाम) ओघ १ (मोल और पूजा में जल देने का
नाम) अर्घ १ (पाप, दुःख, शिकार, जुआँ आदि खेलने का नाम) अ-
घ १॥ २७॥ (हस्व और अल्प का नाम) लघु १॥ इति घान्ताः॥
(सिकहर, कांच, नेत्र रोग इन का नाम) काच १ (विपरीत विस्त-
र उतरना इन का नाम) प्रपञ्च १ अग्नि, आषाढ़, मन्त्री, शु-
द्धचित्त, पवित्र, उज्ज्वल, श्रृंगारादि करना इन का नाम) शुचि १
(वाञ्छा और किरण का नाम) रुचि १॥ २८॥ २९॥ इति चान्ताः॥

संज्ञास्याच्चेतनानाम हस्ताद्यैश्चार्थसूचना ३३ ॥ इति ञान्ताः ॥ काके भगण्डौ करटौ गजगण्डकटी कटौ । शिपिविष्टस्तु खलतौ दुश्चर्म्मणि महेश्वरे ३४ देवशिल्पिन्यपि त्वष्टा दिष्टं दैवेपि न द्वयोः । रसे कटुः कट्वकार्य्ये त्रिषु मत्सरतीक्ष्णयोः ॥ रिष्टं क्षेमाशुभाभावेष्वरिष्टे तु शुभाशुभे ३५ मायानिश्चलयन्त्रेषु कैतवानृतराशिषु । अयोघने शैलशृङ्गे सीराङ्गे कूटमस्त्रियाम् ३६ सूक्ष्मैलायांत्रुटिस्त्रीस्यात्कालेऽल्पे संशयेपिसा ॥

(बुद्धि नाम हस्तादि से अर्थ बताना गायत्री सूर्य्य की स्त्री इन का नाम) संज्ञा २ ॥ ३३ ॥ इति ञान्ताः ॥ (काक हाथी का गाल कुंभस्थल निन्द्यजीव भकार शब्दादि आठ इन का नाम) करट २ (हाथी का गण्ड स्थल करि होंव सुर्खी समय इन का नाम) कट २ (खौरा नष्ट चर्म्म महादेव का नाम) शिपिविष्ट २ ॥ ३४ ॥ (विश्वकर्म्मा सूर्य्य और बढ़ई का नाम) त्वष्टा २ (भाग्य और काल का नाम) दिष्ट २ (रस अकार्य्य अहङ्कार तीक्ष्ण इन का नाम) कटु २ (क्षेम अशुभ शुभ इन का नाम) रिष्ट २ (शुभ अशुभ सौरी का गृह माठा लहिरा मरसा का चिन्ह इन का नाम) अरिष्ट २ ॥ ३५ ॥ माया निश्चल यन्त्र कपट झूंठ राशि धन पर्व्वत कँगूरा कुठ इन का नाम) कूट २ ॥ ३६ ॥ (छोटी इलायची काल अक्षर का रहिजाना अल्प संशय इन का नाम) त्रुटि २ ॥

आत्युत्कर्षाश्रयः कोट्यो मूले लग्न कचे जटा ३७
व्युष्टिः फले समृद्धौ च दृष्टिर्ज्ञानेऽक्ष्णि दर्शने ।
इष्टिर्यागेच्छयोस्सृष्टन्निश्चिते बहुनि त्रिषु ३८
कष्टे तु कृच्छ्र गहने दक्षाऽमन्दागदेष्वपि । पटुर्द्वौ
वाच्यलिङ्गौ च ॥ इति टान्ताः ॥ नीलकण्ठः शिवेऽ
पि च ३९ पुंसि कोष्ठोऽन्तर्जठरं कुसूलोऽन्तर्गृहं तथा
निष्ठा निष्पत्तिनाशान्ताः काष्ठोत्कर्षे स्थितौ दिशि
४० त्रिषु ज्येष्ठोऽतिशस्तेऽपि कनिष्ठोऽतियुवाल्प-
योः ॥ इति ठान्ताः ॥

(अति वा धन्वा कीनोक प्रकर्षला अथिवा कोरा करोरि इनका नाम) कोटि १ (जर और लपटाने वारों का नाम) जटा १ ॥ ३७ ॥ (फल और सम्पदा का नाम) व्युष्टि १ (ज्ञान और देखने का नाम) दृष्टि १ (यज्ञ इच्छा संग्रह श्लोक इन का नाम) इष्टि १ (निश्चित बहुत सुन्न इन का नाम) सृष्ट १ ॥ ३८ ॥ (दुःख गहन दुराधिगम स्थान का नाम) कष्ट १ (दक्ष, तीक्ष्ण, रोगहीन का नाम) पटु १ ॥ इति टान्ताः ॥ (शिव और मयूर का नाम) नीलकण्ठ १ ॥ ३९ ॥ (अन्तर्जठर पेट का भीतर जिसे कोठा कहते (कुसूल) (अन्न रखने का स्थान) इसे भी कोठा कहते (अन्तर्गृह) कोठ उत्कर्ष स्थित और दिशा का नाम) काष्ठा १ ॥ ४० ॥ (अत्युत्तम, अति वृद्ध, बड़ा भाई, वैशाख के उ-त्तर का मास इन का नाम) ज्येष्ठ १ (बाल और छोट भाई का नाम) कनिष्ठ १ ॥ इति ठान्ताः ॥

दण्डोऽस्त्री लगुडेऽपि स्याद्गुडो गोलेक्षुपाकयोः ५१
सर्प्पमांसात्पश्वोर्व्याडो गोभूवाचस्त्विडा इलाः।
क्ष्वेडा वंशशलाकापि नाडी नालेऽपि षट्क्षणे ५२
काण्डोऽस्त्री दण्डबाणार्व्ववर्गावसरवारिषु।
स्याद्भाण्डमश्वाभरणेऽमत्रे मूलवणिग्धने ५३
इति डान्ताः॥ भृशप्रतिज्ञयोर्बाढं प्रगाढं भृश-
कृच्छ्रयोः। शक्तस्थूलौ त्रिषु दृढौ व्यूढौ विन्यस्तसं-
हतौ ५४ ॥ इति ढान्ताः॥ भ्रूणोऽर्भके स्त्रैणगर्भे
बाणो बलिसुते शरे॥

(दम, डांड देना, दण्डा, ख़म, सेना, अश्व खेलरि, अभिमान, ग्रह और सूर्य्य के पारिपार्श्विक का नाम) दण्ड १ (गुण्डा और गुर का नाम) गुड १ ॥ ५१ ॥ (सर्प और मांसाद पशु व्याघ्र का नाम) व्याड १ (गाय पृथ्वी बाणी बुध की स्त्री इन का नाम) इडा (इकार लकार की एकता से इला भी इन्हीं का नाम है (बांस की शलाका और क्रम से विष का नाम) क्ष्वेडा १ क्ष्वेड २ (नली और नाड़ी का नाम) नाडी १ ॥ ५२ ॥ (दण्ड, बाण, अर्व्वा, खराब परिच्छेद अवसर इन का नाम) काण्ड १ (घोड़ा, गहना मूर भांड़ा भंड़िया इन का नाम) भाण्ड १ ॥ ५३ ॥ इति डान्ताः ॥ अत्यर्थ प्रतिज्ञा और पोढ़ का नाम बाढ़ १ (भृश और दुःख का नाम) प्रगाढ़ १ (समर्थ और मोटे का नाम, दृढ १ (विन्यस्त संहत और पृथुल का नाम व्यूढ १ ॥ इति ढान्ताः ॥ ५४ ॥ (बालक और स्त्री के गर्भ का नाम) भ्रूण १ (बाणा सुर और तीर का नाम) बाण १ ॥

हरिणी स्यान्मृगी हेमप्रतिमा हरिता च या। त्रिषु
पाण्डौ च हरिणः स्थूणा स्तम्भेपि वेश्मनः ५०
तृष्णे स्पृहापिपासे द्वे जुगुप्साकरुणे घृणे। वणि-
क्पथे च विपणिः सुराप्रत्यक्च वारुणी ५१ करेणु-
रिभ्यां स्त्री नेभे द्रविणं तु बलं धनम्। शरणं गृहर-
क्षित्रोः श्रीपर्णं कमलेपि च ५२ विषाभिमरलोहे-
षु तीक्ष्णं क्लीवे खरे त्रिषु। प्रमाणं हेतुमर्यादाशा-
स्त्रेयत्ताप्रमातृषु ५३ करणं साधकतमं क्षेत्रगा-
त्रेन्द्रियेष्वपि॥

(मृगी सुवर्ण की प्रतिमा हरी वस्तु वृक्ष भेद इनका नाम) हरिणी २
(मृग और पाण्डुर वर्ण का नाम) हरिणः २ (थून्ही और लोहे की
प्रतिमा का नाम) स्थूणा २॥ ५०॥ (वांछा और पियास का नाम)
तृष्णा २ (जुगुप्सा निन्दा और करुणा का नाम) घृणा २ (बा-
ज़ार की गली और दूकानों का नाम) विपणि २ (मदिरा और
पश्चिम की दिशा का नाम) वारुणी २॥ ५१॥ (हाथी हथिनी का
नाम) करेणु २ (बल और धन का नाम) द्रविण २ (गृह रक्षा करनेवा-
ले वध और रक्षा करने का नाम) शरण २ (कमल और अग्निमन्थ
का नाम) श्रीपर्ण २॥ ५२॥ (विषयुक्त, पैन, लोह इन का नाम) ती-
क्ष्ण २ (हेतु मर्य्यादा शास्त्र परिच्छेद ज्ञाता इन का नाम) प्रमाण २
॥ ५३॥ (जिस्से क्रिया कीजाय खेत देह, इन्द्रिय, कारण, कायस्थ
व्रत बन्ध नाचने गाने शब्द में वैश्य से उत्पन्न और वानर का नाम)
करण २॥

प्राणायुत्पादे संसरणमसंबाधचमूगतौ ५४ घण्टापथेथ वान्तान्ने समुद्गिरणमुन्नये। अतस्त्रिषुविषाणं स्यात्पशुशृङ्गेभदन्तयोः ५५ प्रवणंक्रमनिम्नोर्व्यांप्रह्वेनातुचतुष्पथे। संकीर्णौनिचिताशुद्धौ निरिणं शून्यमूषरम् ५६ सेतौ च वरणो वेणी नदीभेदे कचोच्चये॥ इतिणान्ताः॥ देवसूर्यौ विवस्वन्तौ सरस्वन्तौ नदार्णवौ। पक्षितार्क्ष्यौ गरुत्मन्तौ शकुन्तौ भासपक्षिणौ ५७ अग्न्युत्पातौ धूमकेतू जीमूतौ मेघपर्वतौ। हस्तौ तु पाणिनक्षत्रे मरुतौ पवनामरौ ५८

(प्राण्युत्पाद जीवों के जन्म बिना रोक सैन्य के गमन और घण्टापथ सड़क का नाम) संसरण १॥ ५४॥ (डांके हुये अन्न उन्नय जल पात्रादि के ऊपर ले जाने और उखार डारने का नाम) उद्गिरण १ (पशुओं के सींग और हाथी दांत के नाम) विषाण १ विषाणी १॥ ५५॥ (क्रम से उतार पृथ्वी प्रह्व नम्र चतुष्पथ चौरहा वा चौक का नाम) प्रवण १ (निचित व्याप्त अशुद्ध सङ्कुल वर्णसंकर और सकसे का नाम) सङ्कीर्ण १ (शून्य और ऊसर का नाम) इरिण १॥ ५६॥ (सेतु पुल्ह का नाम) वरण १ (स्त्रियों की चोटी और एक नदी का नाम) वेणी १॥ इतिणान्ताः॥ (देव और सूर्य का नाम) विवस्वान् १ (पक्षी और गरुड़ का नाम) गरुत्मान् १ (शूद्र और पक्षिमात्र का नाम) शकुन्त १॥ ५७॥ (अग्नि और धूममयी तारा का नाम) धूमकेतु १ (मेघ और पर्वत का नाम) जीमूत १ (हाथ और तेरहें नक्षत्र का नाम) हस्त १ (वायु और देवता का नाम) मरुत् १॥ ५८॥

यन्ता हस्तिपके सूते भर्त्ता धातरि पोष्टरि। यान-
पात्रे शिशौ पोतः प्रेतः प्राण्यन्तरे मृते ५९ ग्रह-
भेदे ध्वजे केतुः पार्थिवे तनये सुतः। स्थपतिः
कारुभेदेऽपि भूभृद्भूमिधरे नृपे ६० मूर्द्धाभिषि-
क्तो भूपेऽपि ऋतुः स्त्री कुसुमेऽपि च। विष्णावप्य
जिताव्यक्तौ सूतस्त्वष्टरि सारथौ ६१ व्यक्तः प्रा-
ज्ञेऽपि दृष्टान्तावुभौ शास्त्रनिदर्शने। क्षत्ता स्या-
त्सारथौ द्वास्थे क्षत्रियायां च शूद्रजे ६२

(हथिवाल और बहल लढ़ी आदि के हांकने वाले का नाम) यन्ता १ (धारण करने वाले और पोषण करने वाले और स्वामी का नाम) भर्त्ता १ (बहित्र लड़का और नाव का नाम) पोत १ (परेत और मृतक का नाम) प्रेत १ ॥ ५९ ॥ (पता का और नवयें ग्रह का नाम) केतु १ (राजा और पुत्र का नाम) सुत १ (थवई और कंचुकी का नाम) स्थपति १ (भूमिधर पर्व्वत और राजा का नाम) भूभृत् १ ॥ ६० ॥ (राजा और क्षत्रियमात्र का नाम) मूर्द्धाभिषिक्त १ (स्त्री के मास मास पर भग से रुधिर बहने और वसन्तादि समय का नाम) ऋतु १ (विष्णु और महादेव के नाम) अजित १ अव्यक्त १ (सारथि बढ़ई ब्राह्मणी में क्षत्रिय से उत्पन्न हुये और पौराणिक परिडत का नाम) सूत १ ॥ ६१ ॥ (पण्डित और स्फुट का नाम) व्यक्त १ (तर्क्कादि शास्त्र और उदाहरण का नाम) दृष्टान्त १ (सारथि द्वारपालक और क्षत्रियाणी में शूद्र से उत्पन्न हुये का नाम) क्षत्ता १ ॥ ६२ ॥

वृत्तान्तस्स्यात्प्रकरणो प्रकारे कार्त्स्न्यं वार्त्तयोः।
आनर्त्तस्समरेनृत्य स्थाननीवृद्विशेषयोः ६३ कृ
तान्तोयमसिद्धान्तदैवाकुशलकर्म्मसु। श्लेष्मा
दिरसरक्तादि महाभूतानितद्गुणाः ६४ इन्द्रिया
णयश्मविकृतिश्शब्दयोनिश्चधातवः। कक्षा
न्तरेपिशुद्धान्तोनृपस्स्यात्सर्व्वगोचरे ६५ कास्नू
सामर्थ्ययोश्शक्तिर्म्मूर्त्तिः काठिन्यकाययोः।
विस्तारवल्ल्योर्व्रततिर्व्वसती रात्रिवेश्मनोः
६६ क्षयार्च्चयोरपचितिस्सातिर्दानावसानयोः।
आर्त्तिः पीडाधनुष्कोट्योर्ज्जातिस्सामान्यजन्मनोः ६७

प्रकरण- प्रकार- साकल्य- और वार्त्ताका नाम) वृत्तान्त १ ( समर नाचका स्थान नीवृद्वि शेष द्वारका पुरी का नाम) आनर्त्त १ ॥ ६३ ॥ ( यम राज सिद्धान्त भाग्य और पाप का नाम) कृतान्त १ ( श्लेष्मपित्ता-दि रक्त- वसा महाभूत पृथिवी वायु आदि ५ तिनके गुण- गन्ध- स्प-र्शादि ॥ ६४ ॥ ( नेत्रादि इन्द्रिय अश्म विकृति मैनशिर गेरू आदि श-ब्दोंके जन्मस्थान - भूसत्तायाम् गम्लृ- गतौ इत्यादि का नाम) धातु १ ( राज धानी और राजाओंके जनाने का नाम) शुद्धान्त १ ॥ ६५ ( कास्नू वा बलकी वा सांग और बलका नाम) शक्ति १ ( कठिन ता और काम का नाम) मूर्त्ति १ ( विस्तार और वल्लीका नाम व्रतति १ ( रात्रि और गृह का नाम) वसति १ ॥ ६६ ॥ ( क्षय और पूजाका नाम) अपचिति १ ( दान और अन्त का नाम) साति १ ( पीड़ा अरु धन्वा की कोटि का नाम) आर्त्ति १ ( सामान्य जात और जन्म का नाम) जाति १ ॥ ६७ ॥

अचारस्यन्दयोरीतिरीतिर्डिम्बप्रवासयोः। उदये-
ऽधिगमे प्राप्तिस्त्रेता त्वग्नित्रये युगे ६८ वीणा-
भेदेपि महती भूतिर्भस्मनि सम्पदि। नदीन-
गर्य्योर्नागानाम्भोगवत्यथ सङ्गरे ६९ सङ्गे
सभायां समितिः क्षयवासावपि क्षिती। रवेर-
र्च्चिश्च शस्त्रञ्च वह्निज्वाला च हेतयः ७० जगती
जगति च्छन्दोविशेषेपि क्षितावपि। पंक्तिश्छ-
न्दोपि दशमं स्यात्प्रभावेपि चायतिः ७१

(लोकाचार और स्यन्द प्रस्रवण का नाम) रीति १ (डिम्ब ७ प्रकार का है यथा-अति दृष्टि-अनावृष्टि-टीड़ी-मूषक-सुवा-अपनी-फ़ौज-पराई फ़ौज और प्रवास का नाम) ईति १ (उत्पत्ति लाभ और पहुंचने का नाम) प्राप्ति १ (अग्नित्रय) दक्षिणा-गार्हपत्य-आहवनीय (और दूसरे युग का नाम) त्रेता २॥ ६८॥ (नारद की वीणा-और महत्त्व करके युक्त भार्य्यादि का नाम) महती १ (भस्म और अणिमा महिमादि आठ ऐश्वर्य्यों का नाम) भूति १ (सर्प्पों की नदी और नगरी का नाम) भोगवती १॥ ६९॥ सङ्गर २ (संग्राम और सभा का नाम) समिति १ (निवास-क्षय और पृथ्वी का नाम) क्षिति १ (सूर्य्य प्रभा शस्त्र और अग्नि का नाम) हेति १॥ ७०॥ (लोक पृथ्वी छन्दोविशेष व द्वादशाक्षर पद वृत्त और जनों का नाम) जगती १ (दश अक्षर के चरण का छन्द और पांति का नाम) पंक्ति १ (अन्तर काल और प्रभाव का नाम) आयति १॥ ७१॥

पत्तिर्गतौ च मूले तु पक्षतिः पक्षभेदयोः। प्रकृतिर्योनिलिङ्गे च कैशिक्याद्याश्च वृत्तयः ७२ सिकतास्स्युर्वालुकापि वेदे श्रवसि च श्रुतिः। वनिताजनितात्यर्थानुरागायाश्च योषिति ७३ गुप्तिः क्षितिव्युदासेपि धृतिर्धारणधैर्ययोः। बृहती क्षुद्रवार्त्ताकी छन्दोभेदे महत्यपि ७४ वासिता स्त्री करिण्योश्च वार्त्ता वृत्तौ जनश्रुतौ। वार्त्तम्फल्ग्वन्यरोगे च त्रिष्वप्सु च घृतामृते ७५

(बाल और सैन्य का नाम) पत्ति२ (पारव परव ना और परीवा का नाम) पक्षति२ (भवलिंग प्रधान तत्त्व मंत्री आदि और स्वभाव का नाम) प्रकृति२ (कौशिकी जीविका और सूत्रों के अर्थ विवरण का नाम) वृत्ति२ ॥७२॥ (बारू और सिटकि हा देश का नाम) सिकता२ (वेदकान और सुनने का नाम) श्रुति२ (अति अनुरागयुक्त स्त्री और स्त्री मात्र का भी नाम) वनिता२ ॥७३॥ (क्षितिव्युदास- भूविवर- रक्षा और बन्दीखाना का नाम) गुप्ति२ (धारणा और धैर्य्य का नाम) धृति२ (भटकैया बनभांटा भांटा और नव अक्षर के चरण के छन्द का नाम) बृहती२ ॥७४॥ (स्त्री और हथिनी का नाम) वासिता२ (और पक्षियों के शब्द का नाम) वासित२ (जीविका और बतकही का नाम) वार्ता२ (लघु रोगरहित और असार का नाम) वार्त्त२ (पानी घी सुधा यज्ञशेष का नाम) अमृत२ (यज्ञ शेष को छोड़ इन्हीं सबों का नाम) घृत२॥ ७५॥

कलधौतं रूप्य हेम्नोर्न्निमित्तं हेतु लक्ष्मणोः ।
श्रुतं शास्त्रावधृत योर्य्युग पर्य्याप्तयोः कृतम् ७६
अत्याहितम्महाभीतिः कर्म्मजीवानपेक्षिच ।
युक्ते क्ष्मादावृते भूतम्प्राणयतीते समेत्रिषु ७७
वृत्तम्पद्ये चरित्रे त्रिष्वतीते दृढ़ निस्तले । महद्
राज्यञ्चावगीतं जन्ये स्यान्गर्हिते त्रिषु ७८ श्वे-
तं रूप्येऽपि रजतं हेम्नि रूप्ये सिते त्रिषु । त्रिष्विती
जगदिङ्गे ऽपि रक्तं नील्यादिरागिच ७९ अवदा-
तस्सिते पीते शुद्धे वद्धार्ज्जुनौ सितौ । युक्तेऽति सं-
स्कृते मर्षिण्यभिनीतोऽथ संस्कृतम् ८०

(चांदी सोना का नाम) कलधौत १ (हेतु और चिह्न का नाम) नि-
मित्त १ (शास्त्र और सुने हुये का नाम) श्रुत १ (सत्य युग के पर्य्याप्ति
अलमर्त्थ का नाम) कृत १ ॥ ७६ ॥ (महा भय का नाम) अत्याहित
१ (न्याय पृथ्वी जलादि ५ सत्य बीते समय का नाम) भूत १ ॥ ७७ ॥
(पद्य श्लोक चरित्र अतीत भूत काल दृढ़ गोल इन का नाम)
वृत्त १ (राज्य और बृहत् का नाम) महत् १ (निन्दित जनों के अप-
वाद का नाम) अवगीत १ ॥ ७८ ॥ (रूपया उज्ज्वल और द्वीप वि-
शेष का नाम) श्वेत १ (सोना चांदी और उज्ज्वल का नाम) रजत १
(जंगम और भुवन का नाम) जगत् १ (नीलादि के रंग और रुधिर का
नाम) रक्त १ ॥ ७९ ॥ (सित पीत निर्म्मल का नाम) अवदात १ (बद्ध और
अर्जुन शुक्लक अति प्रशस्त और असहनशील का नाम) अभिनीत १ (बनाये
हुये पदार्त्थ और शास्त्र के लक्षण करके युक्त का नाम) संस्कृत १ ॥ ८० ॥

कृत्रिमेलक्षणोपेतेऽप्यनन्तोनवधावपि।ख्या-
तेहृष्टेप्रतीतोभिजातस्तुकुलजेबुधे ८१ विवि-
क्तौपूतविजनौमूर्च्छितौमूढसोच्छ्रयौ।द्वौचा-
म्लपरुषौशुक्तौशितौधवलमेचकौ ८२ सत्ये
साधौविद्यमानेप्रशस्तेऽभ्यर्हितेचसत्।पुरस्कृ-
तःपूजितेरात्यभियुक्तेऽग्रतःकृते ८३ निवाता-
वाश्रयावातौशस्त्राभेद्यञ्चवर्म्मयत्।जातो-
न्नद्धप्रवृद्धास्स्युरुच्छ्रिताउत्थितास्त्वमी ८४
वृद्धिमत्प्रोद्यतोत्पन्नाःआदृतौसादरार्चितौ।
इतितान्ताः॥अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिषु ८५

(अनवधि जिस की मर्य्यादा नहो विष्णु और शेष का नाम) अनन्त१
(प्रसिद्ध और हर्षित का नाम) प्रतीत१ (कुलीन और पंडित का ना-
म) अभिजात१॥८१॥ (पवित्र और विजन एकान्त का नाम) विवि-
क्त१ (मोहित और बढ़ती को प्राप्त हुये का नाम) मूर्च्छित१ (आमि-
ल और निठुर का नाम) शुक्त१ (धवल शुक्ल मेचक कृष्ण वर्ण
का नाम) शिति१॥८२॥ (सत्य साधु विद्यमान प्रशस्त अभ्य-
र्हित का नाम) सत्१ (पूजित शत्रु सेपीडित और आगे किये हुये
का नाम) पुरस्कृत१॥८३॥ (निवास वायुरहित और जिस कव-
च में शस्त्र सेन कटे उन का नाम) निवात१ (उत्पन्न दृप्त और वृद्ध
का नाम) उच्छ्रित१॥८४॥ (वृद्धिमान् प्रोद्यत उत्पन्न इन का ना-
म) उत्थित१ (आदर किये हुये और पूजित का नाम) आदृत१ (इतिता-
न्ताः (वाच्य धन वस्तु प्रयोजन निवर्त्तन और विषय का नाम) अर्थशब्द

निपानागमयोस्तीर्थमृषिजुष्टेजलेगुरौ। समर्थस्त्रिषु शक्तिस्थे सम्बद्धार्थेहितेपिच ८६ दशमीस्थौ क्षीणरागवृद्धौ वीथीपदव्यपि। आस्थानीयत्न-योरास्थाप्रस्थोऽस्त्री सानुमानयोः ८७ शास्त्रद्र-विणयोर्ग्रन्थःसंस्थाधारेस्थितौमृतौ॥ इति था-न्ताः॥ अभिप्राय वशौ छन्दावब्दौजीमूतवत्सरौ। अपवादौतुनिन्दाज्ञेदायादौसुतबान्धवौ ८८ पादारश्म्यंघ्रितुर्य्यांशाश्चन्द्राग्न्यर्कास्तमोनुदः। निर्व्वादोजनवादेपिशादोजम्बालशाष्पयोः ८९

(कूपादि जलाशय वोद्ध रहित शास्त्र गुरु और अयोध्या काशी आदि का नाम) तीर्त्थ १ (शक्ति में टिके हुये सम्बन्धार्त्थ और हित का नाम) समर्त्थ १॥ ८६॥ (रस रहित और अति वृद्ध का नाम) दशमीस्थ १ (मार्ग और पंक्ति का नाम) वीथी १ (आस्थानी सभा और यत्न का नाम) आस्था १ (कंगूरा और पसर का नाम) प्रस्थ १॥ ८७॥ (शास्त्र और द्रव्य का नाम) ग्रन्थ १ (आधार स्थिति और मरण का नाम) संस्था १॥ इति थान्ताः॥ (अभिप्राय और अधीन का नाम) छन्द १ (मेघ और वर्ष का नाम) अब्द १ (निन्दा और आज्ञा का नाम) अपवाद १ (सुत और भाई बन्धु का नाम) दायाद १॥ ८८॥ (किरण चरण और चौथाई का नाम) पाद १ (चन्द्रमा अग्नि और सूर्य्य का नाम) तमोनुद १ (लोकापवाद और निश्चित वाद का नाम) निर्वाद १ (जम्बाल वोदा और वाल तृण का नाम) शाद १ ॥ ८९ ॥

आरावेरुदितेत्रातर्य्याक्रन्दोदारुणेरणे। स्या-
त्प्रसादोऽनुरागेऽपि सूदस्याद्व्यंजनेपिच ९०
गोष्ठाध्यक्षेपिगोविन्दोहर्षेप्यामोदवन्मदः। प्रा-
धान्येराजलिङ्गेचवृषाङ्गेककुदोऽस्त्रियाम् ९१
स्त्रीसम्विज्ज्ञानसम्भाषाक्रियाकाराजिनामसु।
धर्म्मेरहस्युपनिषत्स्यादृतौवत्सरेशरत् ९२ प-
दम्व्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु। गो-
ष्पदंसेवितेमानेप्रतिष्ठाकृत्यमास्पदम् ९३ त्रि-
ष्विष्टमधुरौस्वादूमृदूचातीक्ष्णकोमलौ॥

(आरव कष्ट पुनः शब्द रक्षक और दारुण युद्ध का नाम) आक्रन्द १ (अनुग्रह प्रसन्नता और काव्य के गुण का नाम) प्रसाद १ (व्यञ्जन और रसोई करनेवाले का नाम) सूद २॥ ९०॥ (गोष्ठाध्यक्ष गोपालादि वृहस्पति और श्रीकृष्ण चन्द्र का नाम) गोविन्द १ (हर्ष और अतिनिर्हारि गन्ध का नाम) आमोद २ (हर्ष गर्व्व गज मद और कन्दर्प्प का नाम) मद २ (प्रधान राजचिन्ह और बैल के कांधे का नाम) ककुद १ ॥ ९१॥ (ज्ञान सम्भाषण कर्म्म नियम युद्ध और नाम का नाम) संवित् १ (धर्म्म एकान्त और वेदान्त का नाम) उपनिषद् १ (क्वार कार्त्तिक के समय और वर्ष का नाम) शरत् १॥ ९२॥ (व्यवसिति व्यवसाय रक्षा स्थान चिह्न चरण चिन्ह चरण वस्तु इन का नाम) पद १ (गायों के स्थान और उन के खुर मात्र की लम्बाई चौड़ाई का नाम) गोष्पद १ (सेवित स्थान और करने का नाम) आस्पद १॥ ९३॥ (इ-ष्ट और मधुर का नाम) स्वादु १ (को[illegible]ल और कोमल का [illegible]) मृदु १॥

मूढाल्पापटुनिर्भाग्या मन्दास्स्युर्द्वौ तु शारदौ ९४
प्रत्यग्राप्रतिभौ विद्वत्सुप्रगल्भौ विशारदौ ॥ इति
दान्ताः ॥ व्यामो वटश्च न्यग्रोधावुत्सेधः कायव-
न्नतिः ९५ पर्य्याहारश्च मार्गश्च विवधौ वीवधौ
च तौ । परिधिर्य्यज्ञियतरोश्शाखायामुपसूर्य्य-
के ९६ बन्धकं व्यसनं चेतःपीडाधिष्ठानमाधयः ।
स्युस्समर्त्थननीवाकनियमाश्च समाधयः ९७ दो-
षोत्पादेनुबन्धस्स्यात्प्रकृत्यादिविनश्वरे । मुख्या-
नुयायिनि शिशौ प्रकृतस्यानुवर्त्तने ९८

( मूर्ख अल्प अप्रवीण और भाग्यहीन इन का नाम ) मन्द १ ॥ ९४ ॥
( नव्यग्र अभिनव और अप्रतिभ इत्यादि का नाम ) शारद १ ( पंडित
और ढीठ का नाम ) विशारद १ ॥ इति दान्ताः ॥ दोनों हाथों के फैला-
ने से बने हुये कुण्डल और बरगद का नाम ) न्यग्रोध २ ( देह और ऊं-
चाई का नाम ) उत्सेध १ ॥ ९५ ॥ ( पर्य्याहार ध्यानादि और मार्ग के
नाम ) विवध १ वीवध २ ( यज्ञिय तरु पलाशादि शाखा सूर्य्य के
चारों ओर जो कभी २ घेरा बन जाता है गोल रवेत्तादि के घेरे का
नाम ) परिधि २ ॥ ९६ ॥ ( बन्धक गिरवीं वस्तु व्यसन आपत्ति चेतः
पीड़ा मानसी व्यथा और अधिष्ठान का नाम ) आधि २ ( समर्त्थन नी-
[illegible] मौन और नियम इन का नाम ) समाधि २ ॥ ९७ ॥ ( दोष के उत्पा-
[illegible] जिन [illegible] देश में जो इत्संज्ञा औ-
र [illegible] वाला [illegible] वच्चू लघु अ-
[illegible] ॥ ९८ ॥

विधुर्विष्णौ चन्द्रमसि परिच्छेदे बिलेऽवधिः । वि-
धिर्विधाने दैवेपि प्रणिधिः प्रार्थने चरे १९९ बुध-
वृद्धौ पण्डितेऽपि स्कन्धस्समुदयेपि च । देशे नद वि-
शेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियाम् २०० विधा वि-
धौ प्रकारे च साधू रम्येपि च त्रिषु । बधूर्जाया स्नुषा
स्त्री च सुधा लेपोऽमृतं स्नुही २०१ सन्धा प्रतिज्ञा म-
र्यादा श्रद्धा सम्प्रत्ययस्स्पृहा । मधु मद्ये पुष्परसे
क्षौद्रेप्यन्धन्तमस्यपि २०२

(विष्णु चन्द्रमा कपूर और राक्षस का नाम) विधु २ (परिच्छेद म-
र्य्यादा बिल और समय का नाम) अवधि ३ (विधान भाग्य और ब्र-
ह्मा का नाम) विधि ३ (प्रार्थना और चलने वाले का नाम) प्रणिधि
२ ॥ १९९ ॥ (पण्डित बूढ़ और चौथे ग्रह का नाम) बुध १ (पण्डित और
बूढ़ का नाम) वृद्ध १ (समुदय समूह कारड राजा और कांधे का
नाम) स्कन्ध १ (सिन्धु देश समुद्र और अटक नदी का नाम) सिन्धु
१ ॥ २०० ॥ (विधान प्रकार और बढ़ाई का नाम) विधा २ (सज्जन
और रम्य का नाम) साधु २ (स्त्री और पतोहू का नाम) बधू १ (लीप-
ने की वस्तु धरोहर की वस्तु बिजुली अमृत सर्प्प के भोजन अँवरा
और स्नुही सेहुंड़ा का नाम) सुधा १ ॥ २०१ ॥ (प्रतिज्ञा अंगीकार
और मर्य्यादा का नाम) सन्धा १ (सम्प्रत्यय आदर और स्पृहा
आकांक्षा का नाम) श्रद्धा १ (मद्य पुष्प रस शहद चैत्र और महु-
आ का नाम) मधु १ (अन्धे और अँधेरे का नाम) अन्ध १
॥ २०२ ॥

अतस्त्रिषु समुन्नद्धौ पण्डितम्मन्यगर्व्वितौ। ब्रह्म-
बन्धुरधिक्षेपे निर्द्देशोऽथावलम्बितः २०३ अविदू-
रोप्यवष्टब्धः प्रसिद्धौ ख्यातभूषितौ॥ इति धान्ताः
॥ सूर्य्यवह्नी चित्रभानू भानूरश्मिदिवाकरौ २०४ भूता-
त्मानौ धातृदेहौ मूर्खनीचौ पृथग्जनौ। ग्रावाणौ
शैलपाषाणौ पत्रिणौ शरपक्षिणौ २०५ तरुशै-
लौ शिखरिणौ शिखिनौ वह्निबर्हिणौ। प्रतिय-
त्नावुभौ लिप्सोपग्रहावथ सादिनौ २०६ द्वौ सार-
थिहयारोहौ वाजिनोऽश्वेषुपक्षिणः। कुलेप्यभि-
जनो जन्मभूम्यामप्यथ हायनाः २०७

(पण्डितम्मन्य मूर्ख और अहङ्कारी का नाम) समुन्नद्ध १ (अधि-
क्षेप निन्दा प्रयोग और ब्राह्मण का नाम) ब्रह्मबन्धु १ (अवल-
म्बित आश्रित (अविदूर सन्निहित का नाम) अवष्टब्ध १ (ख्यात
और भूषित का नाम) प्रसिद्ध १॥ इति धान्ताः॥ (सूर्य्य और अग्नि का
नाम) चित्रभानु १ (किरण और सूर्य्य का नाम) भानु १॥ २०३॥
॥ २०४॥ (धाता और देह का नाम) भूतात्मा १ (मूर्ख और नीच का
नाम) पृथग्जन १ (पर्वत और पत्थर का नाम) ग्रावा १ (बाण बाज
रथ और काराड का नाम) पत्री १॥ २०५॥ (वृक्ष और पर्वत का नाम)
शिखरी १ (अग्नि और मोर का नाम) शिखी १ (बांछा और अनुकू-
ल का नाम) प्रतियत्न १॥ २०६॥ (सारथि और सवार का नाम )
सादी १ (अश्व बाण और पक्षी का नाम) वाजी १ (कुल और जन्म-
भूमि का नाम) अभिजन १॥ २०७॥

वार्षिर्व्रीहिभेदाश्च चन्द्राग्न्यर्का विरोचनाः।
क्लेशेऽपि वृजिनो विश्वकर्मार्कसुरशिल्पिनोः
१०८ आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मव-
र्म च। शक्रो घातुकमत्तेभो वर्षुकाब्दो घना-
घनः १०९ घनो मेघे मूर्त्तिगुणे त्रिषु मूर्त्ते निरन्तरे।
अभिमानोऽर्थादिदर्पे ज्ञाने प्रणयहिंसयोः ११०
इनः सूर्य्ये प्रभौ राजा मृगाङ्के क्षत्रिये नृपे। वाहि-
न्यौ नर्त्तकीदूत्यौ स्रवन्त्यामपि वाहिनी १११
ह्लादिन्यौ वज्रतडितौ वन्दायामपि कामिनी॥

(वर्षकिरण और व्रीहिभेद साठी धान का नाम) हायन १ (चन्द्रमा अग्नि सूर्य्य और प्रह्लाद पुत्र का नाम) विरोचन १ (क्लेश और पाप का नाम) वृजिन १ (सूर्य और देवों के बढ़ई का नाम) विश्वकर्म्मा १ ॥ १०८ ॥ (यत्न धृति बुद्धि स्वभाव ब्रह्म देह और चित्त का नाम) आत्मा १ (इन्द्र घात करने वाले मत वाले हाथी और बरसने वाले बादर का नाम) घनाघन १ ॥ १०९ ॥ (मेघ मूर्त्ति गुण कठिनता कठिन (निरंतर) गझिन और लोह पीटने के हथौरा का नाम) घन १ (द्रव्य पशु कुल गुणादि करके अहङ्कार, ज्ञान, प्रणय और हिंसा का नाम) अभिमान १ ॥ ११० ॥ (सूर्य, राजा और स्वामी का नाम) इन १ (चन्द्रमा, क्षत्रिय, नृप, यक्ष, इन्द्र इन का नाम) राजा १ (नर्त्तकी और दूती का नाम) वाहिनी १ (स्रवन्ती नदी और सेना का नाम) वाहिनी ११ (वज्र और बिजुली का नाम) ह्लादिनी १ (वांदा और स्त्री मात्र का नाम) कामिनी १ ॥

त्वक्देहयोरपि तनुः सूनाऽधोजिह्विकापि च ११२ क्रतुविस्तारयोरस्त्री वितानं त्रिषु तुच्छके। मन्दे ऽथ केतनं कृत्ये केतावुपनिमन्त्रणे ११३ वेदस्तत्त्वन्तपो ब्रह्म ब्रह्मा विप्रः प्रजापतिः। उत्साहने च हिंसायां सूचने चापि गन्धनम् ११४ आतञ्चनम्प्रतीवापजवनाप्यायनार्थकम्। व्यञ्जनं लाञ्छनं श्मश्रुनिष्ठानावयवेष्वपि ११५ स्यात्कौलीनं लोकवादे युद्धे पश्वहिपक्षिणाम्। स्यादुद्यानन्निःसरणे वनभेदे प्रयोजने ११६ अवकाशे स्थितौ स्थानं क्रीडादावपि देवनम्॥

(खाल और देह का नाम) तनु २ (अधो जिह्विका, गल कगिठका, पुनी वधस्थान और हिंसा का नाम) सूना ३ ॥११२॥ (यज्ञ, विस्तार, तुच्छ, घन्य और मन्द का नाम) वितान २ (कार्य, पताका, उपनिमंत्रण का नाम) केतु ३ ॥११३॥ (वेद, चैतन्य और तपस्या का नाम) ब्रह्म २ (विप्र और प्रजापति का नाम) ब्रह्मा २ (उत्साहन, हिंसा और सूचन करने का नाम) गन्धन २॥११४॥ (प्रतीवाप जावन जवन वेग और आप्यायन प्रीणन का नाम) आतञ्चन २ (चिह्न, डाढ़ी मोछ, निशान जेमन और अंग का नाम) व्यञ्जन २॥११५॥ (लोकापवाद, पशु सर्प और पक्षियों के युद्ध और कुलीनता का नाम) कौलीन २ (निकरने, उपवन और प्रयोजन का नाम) उद्यान २॥११६॥ (अवकाश और स्थिति का नाम) स्थान २ (क्रीडा, व्यवहार, विजिगीषादि और जुम्भा का नाम) देवन २॥

उत्थानम्पौरुषे तन्त्रे सन्निविष्टोद्गमेऽपि च ११७
व्युत्थानम्प्रतिरोधे च विरोधाचरणेऽपि च। मा-
रणे मृतसंस्कारे गतौ द्रव्येऽर्त्थदापने ११८ नि-
र्वर्त्तनोपकरणानुव्रज्यासु च साधनम्। निर्य्या-
तनं वैरशुद्धौ दाने न्यासार्पणेऽपि च ११९ व्यस-
नं विपदि भ्रंशे दोषे कामजकोपजे। पक्ष्माक्षि-
लोम्नि किञ्जल्के तन्त्वाद्यंशेऽप्यणीयसि १२०
तिथिभेदे क्षणे पर्व्व वर्त्म नेत्रच्छदे ध्वनि। अका-
र्य्यगुह्ये कौपीनं मैथुनं सङ्गतौ रते १२१

(पौरुष [illegible]) कुटुम्बकृत्य और उठनेका नाम) उत्थान१॥११७॥(प्रति-
रोध, अनादर और विरोधाचरण, पारा आदि मारणा और मृतक, अग्नि-
दग्ध, गमन, द्रव्य, द्रव्यादि देना इन का नाम) व्युत्थान १॥ ११८॥ (नि-
वर्त्तन प्रयोजनसिद्ध करने उपकरण परिकर उपाय और अनुव्रज्या
अनुगम का नाम) साधन१ (वैर, शोधन दान और धरोहरि देने का
नाम) निर्य्यातन १॥ ११९॥ (विपत्ति भ्रंश, नाश वा पतन, कामज
दोष और कोपज दोष का नाम) व्यसन१ (पलक वा वरौनी, केसर
और छोटे से छोटे सूत्र के अंश का नाम) पक्ष्म १॥ १२०॥ (शुक्ल-
पक्ष की अष्टमी, कृष्ण की १४, अमावास्या, पूर्णमासी, संक्रान्ति
और उत्सव का नाम( पर्व्व १ ( नेत्रच्छद पलक वा वरौनी और
मार्ग का नाम) वर्त्म १( अकार्य्य और गुह्य का नाम) कौपीन१
(संगति और सुरत व स्त्री पुरुष के व्यवहार का नाम) मै-
थुन १॥ १२१॥

प्रधानम्परमात्माधीः प्रज्ञानम्बुद्धिचिह्नयोः।
प्रसूनम्पुष्पफलयोर्निधनङ्कुलनाशयोः १२२
क्रन्दने रोदनाह्वाने वर्ष्म देहप्रमाणयोः। गृह-
देहत्विट्प्रभावाधामान्यथचतुष्पथे १२३ सन्नि-
वेशेचसंस्थाने लक्ष्मचिन्हप्रधानयोः। आच्छा-
दनेसम्पिधानमपवारणमित्युभे १२४ आरा-
धनेसाधनंस्यादवाप्तौतोषणेपिच। अधिष्ठान-
ञ्चक्रपुरप्रभावाध्यासनेष्वपि १२५ रत्नंस्वजा-
तिश्रेष्ठेपिवनेसलिलकानने। तलिनम्विरलं
स्तोकेवाच्यलिङ्गन्तथोत्तरे १२६

(परमात्मा, बुद्धि, महा मात्र, प्रकृति और प्रज्ञा का नाम) प्रधान १ (बु-
द्धि और चिन्ह का नाम) प्रज्ञान १ (पुष्प और फल का नाम) प्रसून
१ (कुल और नाश का नाम) निधन १॥ १२२॥ (रोदन और रवह-
वाने का नाम) क्रन्दन १ (देह और प्रमाण का नाम) वर्ष्म १ (गृह-
देह, तृषा, और प्रभाव का नाम) धाम १ (चौक सन्निवेश और रम-
रण का नाम) संस्थान १ (चिन्ह और प्रधान का नाम) लक्ष्म १ (ढ-
कना और वस्त्रादि से ढकने का नाम) आच्छादन १ ॥ १२३॥
॥ १२४॥ (साधन, प्राप्ति और तोषण का नाम) आराधन १ (चक्र
ग्राम, प्रभाव, और आक्रमण का नाम) अधिष्ठान १॥ १२५॥
(मणि और अपनी २ जाति के श्रेष्ठ का नाम) रत्न १ (पानी
और जंगल का नाम) वन १ (विरल और अल्प का नाम) तलि-
न १॥ १२६॥

समानास्सत्समेकेस्युः पिशुनौखलसूचकौ ।
हीनन्यूनावूनगर्ह्यौ वेगिशूरौतरस्विनौ १२७ अ
भिपन्नोपराद्धोऽभिग्रस्तव्यापन्नतावपि ॥ इति
नान्ताः ॥ कलापोभूषणेबर्हेतूणीरेसंहतावपि
पि १२८ परिच्छदेपरीवापःपर्य्युप्तौसलिलस्थि
स्थितौ । गोधुग्गोष्ठपतीगोपौहरविष्णूवृषा
कपी १२९ वाष्पमूष्माश्रुकशिपुत्वन्नमाच्छाद
नन्द्वयम् । तल्पंशय्याट्टदारेषुस्तम्बेपिविटपोऽ
स्त्रियाम् १३० प्राज्ञरूपस्वरूपाभिरूपाबुधमनो
ज्ञयोः ॥ भेस्त्रलिङ्गा अभीकूर्मौ वीणाभेदश्चकच्छपी १३१

(पण्डित, सम और सत्का नाम) समान १ (खल और चुगुल का नाम) पिशुन १ (ऊन अल्प, और निन्द्य के नाम) हीन १ न्यून २ (जल्द बाज औ र शूर वीर का नाम) तरस्वी १ ॥ १२७ ॥ (अपराधी, अभिग्रस्त शत्रु से दबाये हुये और महा दुःखी का नाम) अभिपन्न १ ॥ इति नान्ताः ॥ (भूषण, मयूर पक्ष, तूणीर तरकस, समुदाय और काञ्ची का नाम) कलाप १ ॥ १२८ ॥ (परिच्छद वा छाना, बोना और जल के आधार का नाम) परीवाप १ (गायों के दुहने वालों और गोठ के स्वामी का नाम) गोप १ (महादेव और विष्णु का नाम) वृषाकपि १ ॥ १२९ ॥ (बाफ और आंसू का नाम) वाष्प १ (अन्न और वस्त्र का नाम) कशिपु १ (शय्या अ टारी और स्त्री का नाम) तल्प १ (स्तम्ब तृणादि गुच्छ, विस्तार, शाखा पल्लव और वृक्ष का नाम) विटप १ ॥ १३० ॥ (बुध और सुन्दर के नाम) प्राज्ञरूप १ स्वरूप २ अभिरूप ३ (कछुई और सारस्वती वीणा का नाम) कच्छपी १ ॥ १३१

कुतपो मृगरोमोत्थपटे चाह्नोऽष्टमेंऽशके ॥ इति पान्ताः ॥ रवर्णोपुंसि रेफस्स्यात्कुत्सिते वाच्यलिङ्गकः ॥ इति फान्ताः ॥ अन्तराभवसत्त्वेऽश्वेगन्धर्व्वो दिव्यगायने १३२ कम्बुर्न्नावलये शंखे द्विजिह्वौ सर्प्पसूचकौ । पूर्व्वोन्यलिङ्गः प्रागाह पुंस्वहुत्वेपि पूर्व्वजान १३३ ॥ इति बान्ताः ॥ कुम्भो घटेभमूर्द्धांशौ डिम्भो तु शिशु बालिशौ । स्तम्भोस्थूणाजडीभावौ शम्भू ब्रह्मत्रिलोचनौ १३४ कुक्षिभ्रूणार्भका गर्भा विस्त्रम्भः प्रणयेपि च ॥

(मृगरोम से बने हुये वस्त्र और दिन के अठये भाग का नाम) कुतप१ ॥ इति पान्ताः ॥ (रकार और कुत्सित का नाम) रेफ२ (इति फान्ताः ॥ (जिस्से कि बकार वकार की सवर्णता है इस्से बान्त वान्त दोनों लिखे जाते हैं (प्राणी, अश्व, दिव्य गाने वाले विश्वावसु तुम्बुर आदि और गवैया मात्र का नाम) गन्धर्व्व २ ॥ १३२ ॥ (कङ्कण, शंख, हाथी, सियार और ग्रीवा का नाम) कम्बु २ (सर्प्प और चुगुल का नाम) द्विजिह्व १ (पूरुव और पुरनियों का नाम) पूर्व्व २ ॥ १३३ ॥ (घड़ा और हाथी के मस्तक के अंश, वेश्यापति, कुम्भकर्ण के पुत्र और राशिभेद का नाम) कुम्भ १ (बालक और मूर्ख का नाम) डिम्भ २ (खम्भा और जड़ता का नाम) स्तम्भ २ (ब्रह्मा और शिव का नाम) शम्भु २ ॥ १३४ ॥ (कोषि, गर्भस्थ जन्तु और बालक का नाम) गर्भ २ (शृंगार की प्रार्थना और विश्वास का नाम) विस्त्रम्भ २ वा विश्रम्भ २

स्यादीर्ष्यान्दुन्दुभिःपुंसिस्यादक्षेदुन्दुभिस्त्रियाम् २३५ स्यान्महारजनेक्लीवं कुसुम्भङ्करकेपुमान्। क्षत्रियेपिचनाभिर्नासुरभिर्गविचस्त्रियाम् २३६ सभासंसदिसभ्येचविस्वध्यक्षेपिवल्लभः॥ इतिभान्ताः॥ किरणोप्रग्रहौरश्मीकपिभेकौप्लवङ्गमौ २३७ इच्छामनोभवौकामौशौर्य्येद्योगौपराक्रमौ। धर्म्माःपुण्ययमन्यायस्वभावाचारसोमपाः २३८ उपायपूर्व्वआरम्भउपधाचाप्युपक्रमः। वणिक्पथःपुरम्वेदोनिगमोनागरोवणिक् २३९ ॥

(नुरुही और जुआं का नाम) दुन्दुभि २॥२३५॥ (बेर के फूल और करवा का नाम) कुसुम्भ २ (ढोंढी, नाहू, मुख्य राजा और क्षत्रिय विशेष का नाम) नाभि २ (वसन्त और गाय का नाम) सुरभि २॥२३६॥ (कचहरी और उसमें बैठने वालों का नाम) सभा २ (अध्यक्ष, प्यारे और कुलीन घोड़े का नाम) वल्लभ २॥ इति भान्ताः॥ (प्रग्रह) पगहा, और किरण का नाम) रश्मि २ (बानर और मेढ़ु का का नाम) प्लवंगम २॥ २३७॥ (इच्छा और कन्दर्प्प का नाम) काम २ शौर्य्य सामर्त्थ्य, और यत्न का नाम) पराक्रम २ (पुण्य, यमराज, न्याय, स्वभाव, आचार और देव का नाम) धर्म्म २॥ २३८॥ (उपाय पूर्व्व आरम्भ और मन्त्री आदि के स्वभाव के परखने का नाम) उपक्रम २ (वणिक्पथ वाणिज्य, नगर और वेद का नाम) निगम २ (नागर और बनियां का नाम) नैगम २॥२३९॥

नौगमौ द्वौ बले रामो नीले चारुसिते त्रिषु। ग्रामो शब्दादिपूर्व्वो वृन्देऽपि ग्रामः क्रान्तौ च विक्रमः २५० स्तोमस्तोत्रेऽध्वरे वृन्दे जिह्मस्तु कुटिलेऽलसे। उष्णोऽपि घर्म्मः प्रस्वेदे हावालंकारे भ्रान्तौ च विभ्रमः॥ २५१ गुल्मा रुक्स्तम्बसेनाश्च जामिः स्वसृ कुलस्त्रियोः। क्षिति क्षान्त्योः क्षमा युक्ते क्षमं शक्ते हिते त्रिषु २५२ त्रिषु श्यामौ हरित्कृष्णौ श्यामा स्याच्छारिवा निशा। ललामम्पुच्छपुंड्राश्वभूषाप्राधान्यकेतषु २५३ सूक्ष्ममध्यात्ममप्याद्ये प्रधाने प्रथमस्त्रिषु॥

(बलदेव नील चारु श्वेत जमदग्नि पुत्र और श्री दशरथात्मजजी का नाम) राम २ (वृन्द और गांउ का नाम) ग्राम २ (विक्रमता और पराक्रम का नाम) विक्रम २॥ २५०॥ (स्तोत्र यज्ञ और वृन्द का नाम) स्तोम २ (टेढ़े और अलसहा का नाम) जिह्म (गर्म्म और पसीना का नाम) धर्म्म २ (चेष्टालंकार हाव भ्रान्ति और शोभा का नाम) विभ्रम २॥ २५१॥ (पिलही रोग स्तम्ब कुश गुच्छादि सोना और सैन्य रक्षा का नाम) गुल्म २ (भगिनी और कुल बधू का नाम) जामि २ (पृथ्वी और सहनशीलता का नाम) क्षमा २ (युक्त योग्य शक्त और हित का नाम) क्षम २॥ २५२॥ (हरे और कृष्ण का नाम) श्याम २ (शारिवा शतावरी और रात्रि का नाम) श्यामा २ (पूंछ-पुण्ड्र अश्वादिकों के लिलार के चिह्न, घोड़ा, घोड़े के भूषण प्रधान और ध्वजा का नाम) ललाम २॥ २५३॥ (अध्यात्म और स्थूल का नाम) सूक्ष्म २ (आद्य और प्रधान का नाम) प्रथम॥ २॥

वामौ वल्गु प्रतीपौ द्वावधमौ न्यूनकुत्सितौ २४४
जीर्णञ्च परिभुक्तञ्च यातयाममिदन्द्वयम् ॥
इति मान्ताः ॥ तुरङ्ग गरुडौ तार्क्ष्यौ निलयाप-
चयौ क्षयौ । श्वशुर्यौ देवरश्यालौ भ्रातृव्यौ
भ्रातृजद्विषौ २४५ पर्जन्यौ रसदब्देन्द्रौ स्या-
दर्यः स्वामिवैश्ययोः । तिष्यः पुष्ये कलियुगे
पर्यायोऽवसरे क्रमे २४६ प्रत्ययोऽधीनशपथ-
ज्ञानविश्वासहेतुषु । रन्ध्रे शब्देऽथानुशयो दी-
र्घद्वेषानुतापयोः २४७ स्थूलोच्चयस्त्वसाक-
ल्येनागानां मध्यमे गतौ । समया शपथाचारका-
लसिद्धान्तसम्विदः २४८

(शोभा, उलटा, टेढ़ा और महादेव का नाम) वाम २ (न्यून और खराब का नाम) अधम २ ॥ २४४ ॥ (जीर्ण और खाके बहा देने का नाम) यातयाम ॥ इतिमान्ताः ॥ (घोड़े और गरुड़ का नाम) तार्क्ष्य २ (गरह, अपचय कमती और कल्पान्त का नाम) क्षय २ (देवर और सारे का नाम) श्वशुर्य २ (भतीजे और शत्रु का नाम) भ्रातृव्य २ ॥ २४५ ॥ (शब्दित मेघ और इन्द्र का नाम) पर्जन्य २ (स्वामी और वैश्य का नाम) अर्य २ (पुष्य नक्षत्र और कलियुग का नाम) तिष्य २ (अवसर और क्रम का नाम) पर्याय २ ॥ २४६ ॥ (अधीन, शपथ, ज्ञान विश्वास हेतु, छिद्र और शब्द का नाम) प्रत्यय २ (बहुत दिन के विगार और पछिताने का नाम) अनुशय २ ॥ २४७ ॥ (असाकल्य कम और हाथियों की मध्यम चाल का नाम) स्थूलोच्चय २ (समय-सौगन्ध खाने, आचार, काल, सिद्धान्त और अच्छी भाषा का नाम) समय २ ॥ २४८ ॥

व्यसनान्यशुभन्दैवन्विपदित्यनयास्त्रयः। अत्य-
योऽतिक्रमे कृच्छ्रे दोषे दण्डेऽप्यथापदि २४९ यु-
द्धायत्योस्संपरायः पूज्यस्तु श्वशुरेपि च। पश्चाद-
वस्थायिबलं समवायश्च सन्नयौ २५० सङ्घाते
सन्निवेशेच संस्त्यायः प्रणयास्त्वमी। विस्र-
म्भयाच्ञाप्रेमाणो विरोधेपि समुच्छ्रयः २५१ वि-
षयोयस्ययो ज्ञातस्तत्र शब्दादिकेष्वपि। निर्या-
सेपि कषायोस्त्री सभायाञ्च प्रतिश्रयः २५२ प्रा-
योभूम्न्यन्तगमने मन्युर्दैन्ये क्रतौ क्रुधि। रहस्यो-
पस्थयोर्गुह्यं सत्यं शपथतथ्ययोः २५३

(व्यसन जुआं आदि अशुभ भाग्य और विपत्ति का नाम) अनय २(अ-
तिक्रम, कष्ट, दोष, दण्ड और नाश का नाम) अत्यय १ (आपदा युद्धयुद्ध
और आयति उत्तर काल का नाम) सम्पराय १ (पूजा योग्य और श्व-
शुर का नाम) पूज्य २ (सेना के पीछे आने वाले सैन्य और समूह का ना-
म) सन्नय २ ॥ २५० ॥ (सन्निवेश, संघात और विस्तृति का ना-
म) संस्त्याय १ (विश्वास याच्ञा और प्रेम का नाम) प्रणय १ (विरो-
ध और उन्नत का नाम) समुच्छ्रय १॥ २५१॥ (जिस मछली आदि
करके जो जलादि सेवा किया गया है उस का वह विषय है शब्द रूप
रस गन्ध स्पर्श का भी विषय नाम है (काढ़ा और विलेपनादि का ना-
म) कषाय १ (सभा, आश्रय और अभ्युपगम का नाम) प्रतिश्रय १॥
॥ २५२॥ (बहुताई, मरण के निमित्त अन्न छोड़ने मृत्यु और पाप का
नाम) प्राय १ (दीनता, यज्ञ, कोप, शोक और महादेव का नाम) मन्यु १ (गो-
प्य और उपस्थ का नाम) गुह्य १ (सोगंध खाने और सच का नाम) सत्य १॥ २५३॥

वीर्य्यम्बले प्रभावे च द्रव्यम्भव्ये गुणाश्रये । धि-
ष्ण्यं स्थाने गृहे भेऽग्नौ भाग्यङ्कर्म्मशुभाशुभम् १५४
कशेरुहेम्नोर्गाङ्गेयं विशल्या दन्तिकापि च । वृषाकपायी श्रीगौर्य्योरभिख्या नामशोभयोः १५५
आरम्भो निष्कृतिः शिक्षा पूजनं संप्रधारणम् । उपायः कर्म चेष्टा च चिकित्सा च नव क्रियाः १५६
छाया सूर्य्यप्रिया कान्तिः प्रतिबिम्बमनातपः । कक्ष्या प्रकोष्ठे हर्म्यादेः काञ्च्याम्मध्येभबन्धने १५७
कृत्या क्रियादेवतयोस्त्रिषु भेद्ये धनादिभिः । जन्यं स्याज्जनवादेऽपि जघन्योऽन्त्येऽधमेऽपि च १५८

(बल और प्रभाव का नाम) वीर्य्य २ (भव्य सत्त्व गुणाश्रय पृथिवी गन्धादि और धन का नाम) द्रव्य ५ (स्थान और गृह का नाम) धिष्ण्य २ (नक्षत्र अग्नि और पूर्वजन्म के शुभाशुभ कर्म्म का नाम) भाग्य २ ॥ १५४ ॥ (कशेरुका व कशेरु और सुवर्ण का नाम) गांगेय २ (दंतिया, अग्निशिखा और गुरुच इनका नाम) विशल्या २ (लक्ष्मी और पार्व्वती का नाम) वृषाकपायी २ (नाम और शोभा का नाम) अभिख्या २ ॥ १५५ ॥ (आरम्भ, निष्कृति, प्रायश्चित्त, शिक्षा, पूजन, सम्प्रधारण, उपाय, कर्म्म, चेष्टा और चिकित्सा इन सब का नाम) क्रिया २ ॥ १५६ ॥ (सूर्य्य की स्त्री कान्ति, परछाईं और जहां घाम न हो इन का नाम) छाया २ (हर्म्यादि के प्रकोष्ठ, अंत गृह, मेखला, मध्येभ बन्धन वरवाव वेरेति का नाम) कक्ष्या २ ॥ १५७ ॥ (क्रिया और तामसी देवता का नाम) कृत्या २ (निन्दितवाद, युद्ध और संग्राम का नाम) जन्य २ (अन्त्य, अधम और लिंग इन्द्रिय का नाम) जघन्य २ ॥ १५८ ॥

गर्ह्यौ हीनौ च वक्तव्यौ कल्यौ सज्ज निरामयौ। आ-
त्मवाननपेतोर्थादर्थ्यौ पुण्यन्तु चार्व्वपि २५९
रूप्यं प्रशस्त रूपेपि वदान्यो वल्गुवागपि। न्या-
य्येपि मध्यं सौम्यन्तु सुन्दरे सोमदैवते २६०॥ इति
यान्ताः॥ निवहावसरौ वारौ संस्तरौ प्रस्तराध्वरौ।
गुरू गीष्पति पित्राद्यौ द्वापरौ युगसंशयौ २६१ प्र-
कारौ भेदसादृश्ये आकाराविङ्गिताकृती। किं-
शारुस्सस्यशूके षु मरू धन्वधराधरौ २६२

(गर्ह्य निन्द्य, अहीन और कहने के योग्य का नाम) वक्तव्य २ (सज्ज सामर्थ्ययुक्त और राग रहित का नाम) कल्य २ (आत्मवान् धीमान् और जो अर्थ से अपगत न हो उन का नाम) अर्थ्य २ (सुन्दर, सुकृत धर्म और पावन का नाम) पुण्य २॥ २५९॥ (प्रशस्त चांदी सुवर्ण और चांदी मात्र का नाम) रूप्य २ (उत्तम बोलने वाले और दाता का नाम) वदान्य २ (उचित और अवलग्न का नाम) मध्य २ (सुन्दर, बुध और सोम है दैवत जिसके उन का नाम) सौम्य २॥ २६०॥ इति यान्ताः॥ (निवह वृन्द, अवसर और सूर्य्यादि दिन का नाम) वार २ (प्रस्तर कुश की मूठी वा कुश शय्या और अध्वर यज्ञ इन का नाम) संस्तर २ (बृहस्पति, पिता और वेद शास्त्र के पढ़ाने वाले का नाम) गुरु २ (तीसरे युग और संशय का नाम) द्वापर २॥ २६१॥ (भेद और सादृश्य का नाम) प्रकार २ (चेष्टित और आकृति का नाम) आकार २ (सस्य शूक अन्न की बाली के सींकुर और बाण का नाम) किंशारु २ (धन्वा निर्जल देश और पर्वत का नाम) मरु २ ॥२६२॥

आडम्बरस्तूर्य्यरवे गजेन्द्राणाञ्च गर्जिते २६७
अभिहारोऽभियोगे च चौर्ये सन्नहनेपि च । स्या-
ज्जङ्गमे परीवारः खड्गकोशे परिच्छदे २६८ विष्ट-
रो विटपी दर्भमुष्टिः पीठाद्यमासनम् । द्वारिद्वा
स्स्थे प्रतीहारः प्रतीहार्य्यप्यनन्तरे २६९ विपुले-
न कुले विष्णौ बभ्रुर्नापिङ्गले त्रिषु । सारो बले-
स्थिरांशे च न्याय्ये क्लीबं वरे त्रिषु २७० दुरोदरो-
द्यूतकारे पणे द्यूते दुरोदरम् । महारण्ये दुर्गप-
थे कान्तारम्पुन्नपुंसकम् २७१ मत्सरोन्यशुभ-
द्वेषे तद्वत्कृपणयोस्त्रिषु ॥

(बाजा और हाथियों के गर्जने का नाम) आडम्बर १ ॥ २६७ ॥ (अभिग्र-
हण-चोरी और कवचादि के धारण करने का नाम) अभिहार १ (जंग-
म, परिजन, खड्ग, कोश, मियान और परिच्छद उपकरण का नाम)
परिवार १ ॥ २६८ ॥ (विटपी वृक्ष दर्भमुष्टि २५ कुशों की मूठी, पी-
ढ़ा आदि काष्ठ के आसन का नाम) विष्टर १ (द्वार और द्वारपालक
का नाम) प्रतीहार १ (गृह के भीतर के रहने वाली लौंडी आदि का ना-
म) प्रतीहारी १ ॥ २६९ ॥ (बड़े न्योरा, विष्णु और पिंगल का नाम)
बभ्रु १ (बल, सायर, न्याय्य और श्रेष्ठ का नाम) सार १ ॥ २७० ॥ (जुआरी
बाजी और जुआ का नाम) दुरोदर १ (महावन, बिल दुर्गम मार्ग औ-
र कचनार ऊंरव का नाम) कान्तार १ ॥ २७१ ॥ (डाह करने, जल-
ने वाला और कृपण का नाम) मत्सर १ ॥

देवाद्वृते वरः श्रेष्ठे त्रिषु क्लीवं मनाक्प्रिये २७२
वंशांकुरे करीरोऽस्त्री तरुभेदे घटे च ना। ना च मू-
र्छने हस्तसूत्रे प्रतिसरोऽस्त्रियाम् २७३ यमानि-
लेन्द्रचन्द्रार्कविष्णुसिंहांशुवाजिषु। शुका-
हिकपिभेकेषु हरिर्ना कपिले त्रिषु २७४ शर्क-
रा कर्परांशेऽपि यात्रा स्याद्यापने गतौ। इरा भूवा-
क्सुराऽप्सु स्यात्तन्द्री निद्राप्रमीलयोः २७५ धा-
त्री स्यादुपमाताऽपि क्षितिरप्यामलक्यपि। क्षुद्रा
व्यङ्गा नटी वेश्या सरघा कण्टकारिका २७६

(देवता से वांछा करने, श्रेष्ठ, थोड़े प्रिय, दमाद और कुंकुम का नाम) वर २॥ २७२॥ (करिल - करील वृक्ष और करवा का नाम) करीर २ (सेना के पश्चाद्भाग, कंगन और घाव के शुद्ध होने का नाम) प्रतिसर २॥ २७३॥ (यमराज, पवन, इन्द्र, चन्द्र, सूर्य, विष्णु, सिंह, किरण, घोड़ा, सुआ, सर्प, वानर, मेंढ़का और हरे रंग का नाम) हरि २॥ २७४॥ (कर्परांश - सिटकी, खांड़, पत्थर और सिटकि है देश का नाम) शर्करा २ (यापन, चलने और देवता के उत्सव का नाम) यात्रा २ (पृथ्वी, वाणी, मदिरा और जल का नाम) इरा २ (निद्रा और श्रम से मुरझाने का नाम) तन्द्री २॥ २७५॥ (दूध पिलानेवाली, पृथ्वी, आंवरा और माता का नाम) धात्री २ (हीनांगी, नाचनेवाली, पतुरिया, मधुमाखी, भटकटैया और बाधिनि का नाम) क्षुद्रा २ ॥ २७६ ॥

त्रिषु क्रूरेऽधमेऽल्पेपि क्षुद्रम्मात्रापरिच्छदे।
अल्पे च परिमाणे सा मात्रं कार्त्स्न्येऽवधारणे
२७७ आलेख्याश्चर्य्ययोश्चित्रङ्कलत्रं श्रोणि-
भार्य्ययोः। योग्यभाजनयोःपात्रम्पत्रम्वाहनप-
क्षयोः २७८ निदेशग्रन्थयोश्शास्त्रंशस्त्रमायु-
धलोहयोः। स्याज्जटांशुकयोर्नेत्रं क्षेत्रं पत्नी-
शरीरयोः २७९ मुखाग्रे क्रोडहलयोर्गोत्रङ्गोत्र-
न्तुनाम्नि च। सत्रमाच्छादने यज्ञे सदादाने व-
नेपि च २८०

(क्रूर, अधम, अल्प, दरिद्र, कृपण, निकृष्ट और निर्लज्ज का नाम) क्षुद्र १ (परिच्छद अल्प परिमाण का नाम) मात्रा १ (सम्पूर्ण और अवधारण का नाम) मात्र १॥ २७७॥ (चित्र सारी और आ-श्चर्य्य का नाम) चित्र १ (कटि हाड़ और स्त्री का नाम) कलत्र १ (दाना-दि देने के योग्य और वर्त्तमान का नाम) पात्र १ (सवारी परवना प-त्ता और चिट्ठी का नाम) पत्र १॥ २७८॥ (आज्ञा और ग्रन्थ का ना-म) शास्त्र १ (आयुध और लोह का नाम) शस्त्र १ (वृक्ष की जर न-यनसुख व नयनूवस्त्र और आँखि का नाम) नेत्र १ (स्त्री शरीर खेत और सिद्ध स्थान नैमिषारण्यादि का नाम) क्षेत्र १॥ २७९॥ (सूकर और हर के मुखाग्र का नाम) पोत्र १ (नाम पर्व्वत कु-ल का नाम) गोत्र १ (यज्ञ, वस्त्र, नित्य दान, बन और छल का ना-म) सत्र १॥ २८०॥

अजिरम्विषये काये प्यम्बरं व्योम्नि वाससि ।
चक्रं राष्ट्रे प्यक्षरन्तु मोक्षे पि क्षीरमप्सु च २८१ ॥
स्वर्णे पि भूरिचन्द्रौ द्वौ द्वारमात्रे पि गोपुरम् । गु-
हादम्भौ गह्वरं हे रहो ऽन्तिकमुपह्वरे २८२ पुरो-
धिकमुपर्य्यग्राण्यगारे नगरे पुरम् । मन्दिरं
चाथ राष्ट्रो ऽस्त्री विषये स्यादुपद्रवे २८३ दरो-
ऽस्त्रियां भये श्वभ्रे वज्रो ऽस्त्री हीरके पवौ । त-
न्त्रम्प्रधाने सिद्धान्ते सूत्रवाये परिच्छदे २८४
ओषीरं श्चामरे दण्डे प्यौशीरं शयनासने ॥

(विषय - रूप रस गन्ध स्पर्श शब्द, देह, मेढ़ का, चोतना, आत्मा और वायु का नाम) अजिर २ (आकाश और वस्त्र का नाम) अम्बर २ (उपद्रव, सैन्य, पहिया, अस्त्र विशेष और चाक का नाम) चक्र २ (वर्ण और मोक्ष का नाम) अक्षर २ (दुग्ध और पानी का नाम) क्षीर २ ॥ २८१ (स्वर्ण, विष्णु, हर और ब्रह्मा का नाम) भूरि २ (सुवर्ण, चन्द्रमा, कपूर और जल का नाम) चन्द्र २ (पूर्व्व के द्वार और द्वार मात्र का नाम) गो-पुर २ (गुहा, दम्भ, निकुञ्ज और बन का नाम) गह्वर २ (निर्ज्जन स्थान और समीप का नाम) उपह्वर २ ॥ २८२ ॥ (पुर, अधिक और ऊपर का नाम) अग्र २ (गृह और नगर के नाम) पुर २ मन्दिर २ (देश और उपद्रव का नाम) राष्ट्र २ ॥ २८३ ॥ (भय और प्रवल गड्ढा का नाम) दर २ (हीरा और इन्द्र के भिदुर का नाम) वज्र २ (प्रधान, सिद्धान्त, को-री, परिच्छद शास्त्र और कुटुम्ब कृत्य का नाम) तन्त्र २ ॥ २८४ ॥ (चमर की डांडी, खसखस की टट्टी आदि, शयन और आसन का नाम) औशीर २ ॥

उपर्य्युदीच्यश्रेष्ठेष्वप्युत्तरस्स्यादनुत्तरः १८९
एषान्विपर्य्यये श्रेष्ठे दूरानात्मोत्तमाः पराः॥
स्वादुप्रियौ तु मधुरौ क्रूरौ कठिननिर्दयौ १९०
उदारो दातृमहतोरितरस्त्वन्यनीचयोः। म-
न्दस्वच्छन्दयोस्स्वैरश्शुभ्रमुद्दीप्तशुक्लयोः
१९१॥ इतिरान्ताः॥ चूडाकिरीटङ्केशाश्च सं-
यता मौलयस्त्रयः। द्रुमप्रभेद मातङ्ग-काण्ड-
पुष्पाणि पीलवः १९२ कृतान्तानेहसोः का-
लश्चतुर्थेपि युगे कलिः। स्यात्कुरङ्गेपि कम-
लः प्रावारेपि च कम्बलः १९३

(उपरि, उत्तर दिशा और श्रेष्ठ का नाम) उत्तर १ (इन सबों के उलटे अर्थ और श्रेष्ठ का नाम) अनुत्तर १॥ १८९॥ (दूर, अनात्मा अपने से अन्य, उत्तम और शत्रु का नाम) पर १ (स्वादु और प्रिय का नाम) मधुर १ (कठिन और निर्दय का नाम) क्रूर १॥ १९०॥ (दाता, महत्व और दक्षिण का नाम) उदार १ (अन्य और नीच का नाम) इतर १ (मन्द और स्वाधीन का नाम) स्वैर १ (प्रदीप्त और शुक्ल का नाम) शुभ्र १॥ १९१॥ इति रान्ताः॥ (शिखा, किरीट, बांधे हुये बार और मुराड का नाम) मौलि १ (पीलु वृक्ष, हाथी, काराड बाण और फूल का नाम) पीलु १॥ १९२॥ (कृतान्त यमराज, अनेहाः समय, मृत्यु और कृष्ण वर्ण का नाम) काल १ (चौथे युग, कलह, कली और शूर का नाम) कलि १ (कुरंग मृग, जल, पद्म, ताम्र का नाम) कमल १ (कम्बर, गलकम्बरी, सर्प्प कमरा अर्थात् स्वरमकरा जीव का नाम) कम्बल १॥ १९३॥

